नैयमिकः सादरमाराधितः सज्जनैरनुसवनमासेवमानो भगवन्तं तं कमलाकान्तं मासमुवास सहर्षं स हि महानुभावः ॥

काञ्च्यां गौतमवंशवारिधिविधुः सत्सेवनीयो गुरुः
श्रीमान् सद्गुणवारिराशिरवसद् गोपालकृष्णाभिधः ।
सीतारामपदाम्बुजार्चनपरो बाल्येऽपि भक्त्यैकया
त्रय्यां तत्र चतुष्टये च निपुणो मन्त्रार्थपारङ्गतः ॥ १७ ॥

तदनु कदाचिज्जानकीजानिचरणनीरजपरिपूजनानिरतः सेवितुमवगाहितुं च गङ्गादिमहासरितो मन्दिराणि नारायणस्य प्रस्थितः स काञ्च्या अनुमोदनाद्वरदराजस्य समगान्नगरीं गरीयसीं क्रमशः पुनाभिधानाम् ॥

अथागतं तं स निशाम्य मन्त्री
श्रीमन्तराजस्य महोपचारैः ।
आराध्य नारायणनामधेयो
गङ्गावगाहे धिषणां चकार ॥ १८ ॥

शताङ्गमातङ्गतुरङ्गपत्तिभि-
र्वृतः पुनापत्तनतोऽथ निर्ययौ ।
समं धरानिर्जरराजिभिश्शनैः
सदेशिकः सैष गुणार्णसां निधिः ॥ १९ ॥

ततः पुरीं तामधिगत्य पण्ड्यां
शिष्टांश्च मृष्टान्नघृतैः पयोभिः ।
विप्रान् स गोपालगुरुः सहस्रं
सम्भोजयामास सुधीः स एषः ॥ २० ॥

श्रीनारायणमन्त्रिणा सह गुरुर्गोपालकृष्णाभिधः
कृष्णं सेवितुमाययौ तदनु स श्रीविठ्ठलाख्यं तदा ।
सीतारामगुरूत्तमेन बहुधा नत्यादिभिः पूजित-
स्तस्मिन् प्रीतिमसौ चकार कृपया श्रीरामभक्तोत्तमे ॥ २१ ॥

नारायणपदाम्भोजसेवकावपि तत्र तौ ।
नारायणाराध्यमानावूषतुर्दिवसत्रयम् ॥ २२ ॥

ततो ययौ पञ्चवटीं सदेशिको
गुरुः स नारायणमन्त्रिसंयुतः ।
सुरेशसिद्धेशनिषेवितां सदा
सपुण्यपृथ्वीरुहसंविराजिताम् ॥ २३ ॥

तत्रत्यमायामयहेमरङ्कु-
संशिक्षणस्थानविलोकनेन ।
संस्मारितश्रीरघुवर्यगाथ-
स्तन्मन्दिरं प्राप गुरुः सहार्यः ॥ २४ ॥

ब्रह्मप्रार्थनयार्यमान्वयभवं सीतासमेतं पितु-
र्वार्तापालकमङ्गदाभयकरं लङ्केशमित्रेतरम् ।
रामं सोदरसंयुतं गुणनिधिं राज्याभिषिक्तं ततो
गोपालार्ययुतः प्रणम्य विविधैस्तुष्टाव सोऽस्मद्गुरुः ॥

उपदिदेश स रामषडक्षरीं
गुरुवरो गुणवारिनिधिस्तदा ।
निगमसारतमं च स मे गुरुः
सविनयं जगृहे महितो भृशम् ॥ २६ ॥

श्रीराममन्त्रान् स जपन् पठन् श्री-
वेदान्तसारं सह देशिकेन ।
गोदावरीतीर्थपवित्रिताङ्गः
तत्सन्निधौ पञ्चदिनान्युवास ॥ २७ ॥

सीतारामाभिधोऽस्माकमाचार्यस्तदनन्तरम् ।
तीर्त्वा नद्यद्रिदर्यादीन् रेवातीरं ययौ महान् ॥ २८ ॥

तदनु स गुरुः लोपामुद्रामिव सागस्त्यां, सुग्रीवसेनामिव दर्शितदशाननमदभङ्गां, जम्बूसरितामिवार्जुनोल्लसन्तीं, विकटकविवल्गमदां, तरुणीमिव रमणीयवेणीं, मारुतचित्तवृत्तिमिव सदारामोद्भासमानां, उद्यानभूमिमिव विलसद्द्विजां, स्नातृजनसन्दोहसर्वमङ्गलसञ्जनित्रीं वारं वारमवगाह्य रेवावारं सुमनःसङ्घमिव सप्रचेतसं, सरोवरमिव सत्कविराजमानं, राशिचक्रमिव बुधाधिष्ठितमाससाद भृगुवत्सं क्षेत्रम् ॥

ततो बिन्दुसरो गत्वा सरस्वत्याप्लुतं गुरुः ।
स्नात्वा नैयमिकं चक्रे कर्दमाश्रममण्डितम् ॥ २९ ॥

स ततः सिद्धनदीं प्रदक्षिणतः प्रासादवरसमुल्लसन्तीमासाद्य पुरीमवन्तीं कुचेलजालोलकुचेलाभ्यामानीतौ तदानयनप्रभावादुपरि संरुद्धमानाशाखाववलोक्य काष्ठसञ्चयौ भक्तिपारवश्यान्नमस्कृत्य पुनः पुनस्तद्गाथामधिगतमोदमपाठीत् ॥

तदनन्तरं रमणीयचर्यो देशिकोऽयं क्षिप्रं कृतक्षिप्रानद्यवगाहः पञ्चमहीपवत्सकौञ्चागेन्द्रां, कूलोभयजातभूरुहस्तवकमधुपानमत्तमधुकरारावैर्गायन्तीमिव स्नातृजनान् सकलांहसः संरक्ष इति, गङ्गामिव सम्प्राप्तयमुनासङ्गमां चर्मण्वतीं तामवगाह्य नदीमनुष्ठितनिजनैष्ठिको न्यवात्सीत्तत्र ॥

प्रस्थाय तस्माद् गुरुसार्वभौम
आङ्गीरसीं सिन्धुमिवास्मदार्यः ।
प्लक्षोद्भवामाप सरस्वतीं तां
तस्या यथौ कञ्चन भूधरेन्द्रम् ॥ ३० ॥

अगाधधिषणस्तस्मादगात्प्रस्थाय सत्वरम् ।
अगादस्मद्गुरुः पुण्यं नारायाणसरस्ततः ॥ ३१ ॥

अवगाह्य मुहुर्मुहुर्नारायणसरः विरचितनैयमिकः पङ्कजमिव हंसानन्दकमानञ्च स्यमन्तपञ्चकमयमाचार्यः ॥

तत्र च देशिकोऽयं गाहमानजनमानसमलनिस्सारणपटु-तरोदकेषु नवस्वपि सरस्सु निमज्य पुनः पुनस्तदनु सुन्दरीलपनमिव सत्तमालकान्तं नारायणमिव वनमालोल्लसितमासाद्य पुष्करं क्षेत्रं पङ्कजाक्षवक्षस्तट इव पद्मोल्लासिते, पयःपारावार इव बहुक्षीरे, मानसो-त्तरसाधर इव पुष्करराजमाने स्नात्वाथ पुष्करिणीतटे हिरण्याक्षसं-हारलीलाविहृतवराहं वराहं संसेव्य भगवन्तमेवमस्तावीत् ॥

हिरण्यहारिणे वराहरूपधारिणे
नमो विहारिणे स्वभक्तचित्तमन्दिरे ।
स्वदंष्ट्रया धराधृते रमाधृताय ते
तनूजगत्पूरणासमर्थगिरिस्थिते ॥ ३२ ॥

स ततः सद्गुणराशिः
सकलजनानन्दवर्धकः प्रययौ ।
शक्रप्रस्थं पश्यन्
मध्येमार्गं कुरुक्षेत्रम् ॥ ३३ ॥

तदनन्तरं दिशादक्रान्तव्यामवशो देशिकवर्योऽयं प्रस्थाय ततः प्रस्थात् खाण्डवपदपूर्वात् रामानुजार्यचित्तमिव यामुनतीर्थोल्लसमानं, नृपतिमिव नानावनोल्लसितं, रमापतिपदारविन्दमिव श्रीतुलसीसंराजितं, चन्द्रमसमिव सारङ्गसंयुतमागत्य वृन्दावनं क्षेत्रं लक्ष्मीलक्षितवक्षस्तटं, दिविषत्तटिनीपूरमिव पवित्रीकृतलोकत्रितयं, नटमिव गोगोपालरूपधरं, शार्दूलमिव विरचितवत्सवृषहयधेनुकसंहारं, वेदान्ताचार्यमिव उत्प्रेक्षित-पादपं, अनन्तमिव नागकन्यासंस्तुतं, चपेटारिदवृन्दमिव दावानल-जनितभीतिनिवर्तकं, पाण्डुमिव कृतद्विजजायाभयं, शचीपतिमिव विरचितवृषश्रवःपृथुमखनिषेधं, जनकराजानिमिव जकेशवर्णितनाना-वेधगाथं, व्रजवल्लवीजनानुष्ठिततपःसाधं, भञ्जितार्जुनमपि रञ्जितार्जुनं, वैनतेयपरितोषायेव कृतकाळीयमञ्जनं, नखशशिकलाविलसच्चरणारुण-नीरजाभ्यां जितरम्भाकरभाभ्यामूरुभ्यां शिञ्जन्मेखलाष्टापदपटेन कटि-

तटेन श्रीवत्सोल्लसितवक्षःस्थलेन कौस्तुभभूषाभूषणकम्बुकण्ठेन साधु-जनाभिलषितार्थविश्राणनदक्षेण मन्दस्मितेन च समुद्भासमानं भगवन्तं नन्दनन्दनमासेव्य रामानुजाचार्यवचांसीव यामुनतीर्थसंवर्धितानि तुळसीवनबृन्दान्यवलोक्य तेभ्यः स्म सविस्मयं नमस्करोत्येवम् ॥

यस्याः श्रीतुळसीमहीरुह इमे मूले मुनीशाः सदा
वर्तन्ते विटपेषु नाकपतयः पत्रेषु तीर्थानि च ।
मञ्जर्यां कमलोल्लसत्सुकुसुमेष्वप्यम्बुजाद्येषु यां
धत्ते श्रीहरिरादरेण सततं तस्यै तुळस्यै नमः ॥ ३४ ॥

काळीयसरसि स्नात्वा कृष्णक्रीडास्थलान्यथ ।
स संसेव्य गुरुर्भक्त्या मधुरां नगरीमगात् ॥ ३५ ॥

अथ खलु —

अस्मद्गुरुः सद्गुणवारिराशिः
कंसारिसेवोल्लसमानचेताः ।
मध्येपथं वीक्ष्य धराधरेशं
गोवर्धनं गोकुलमाससाद ॥ ३६ ॥

तत्राथ संसेव्य स नन्दनन्दन-
मानन्दमानन्दितमानसो गुरुः ।
पृष्टस्तदीयं चरितं महाजनै-
स्तुष्टः समूचे करुणार्णसां निधिः ॥ ३७ ॥

प्राप्तौ वैश्रवणात्मजौ सुरमुनेः शापाच्चिरं सालतां
तथ्यं तस्य वचः पुरा विरचयन् देवौ चकारेश्वरः ।
सर्वेषां फलदायकोऽहमिति यो लोकस्य सन्दर्शय-
न्निष्टेभ्यो बदरीफलानि समदात्तस्मै नमः स्तान्मम ॥ ३८ ॥

निर्जगाम स जवाद् व्रजादयं
मज्जनाय खलु सज्जनाग्रणीः ।
अञ्जराजतनयाजनिस्थले
तत्पयस्यखिलरञ्जनोत्सुकः ॥ ३९ ॥

सलिलमवजगाहे सैष पौषोरसेय-
मसि कमलकेलीकालसङ्क्रान्तनीलम् ।
सुरवरललनाश्रीगीत्युपाध्यायशिक्षा
इव समनुपठन्तः सन्ततं यत्र केकाः ॥ ४० ॥

ततो हरिद्वारमवाप सोऽयं
द्वारं हरेस्तत्रवसद्द्विजाग्र्यान् ।
उत्तारयन्नासददादरेण
गङ्गोत्तरीं तीर्थपदान्तरङ्गः ॥ ४१ ॥

अथ चायं चतुराननश्चतुराननवत् सरस्वतीसङ्गतां, दुर्गामिव पञ्चास्यसन्धृतां, दितिमिवादित्यसुताश्लिष्टां, ज्योत्स्नामिव सागरानन्दिनीं, योगभिन्मुनिवृन्दवत् सकाशीभवदात्मस्वरूपां, नक्षत्रमालामिवाब्जोल्लसन्तीं, दिनश्रियमिव हंसाभिरामां, जम्बूसरितमिव गाङ्गेयप्रसुवं, भारतपर्ववत् प्रचकाम कोकनदां, गीर्वाणपुरपण्याङ्गनामिव सदा सुरतरूपशोभितां, आवर्तव्रातकैतवाभिह्नुतस्वपौरुषजह्नुमुनिकर्णशष्कुलीप्रवेशं परिसूचयन्तीमद्यतनानां निजतीरायतनानां शुद्धितरभगीरथकीर्त्यर्धसम्पूर्णतया मुद्रितामिव स्फाटिकपेटिकामभिवीक्ष्य तरङ्गिणीं गीर्वाणानामेवमवर्णयत् ॥

यदीयपानीयतरङ्गमाला-
संसक्तपीयूषगभस्तिबिम्बम् ।
ध्रुवं बतामंसत वाण्यभीक-
त्रिविक्रमाङ्घ्र्यर्पितसारसानि ॥ ४२ ॥

यन्नीरनीरन्ध्रनितान्तारिङ्गत-
स्वच्छीभवद्भृङ्गपरम्परासु ।
लसन्ति ताराप्रतिबिम्बकानि
मुक्ताभ्रमादैक्षत कोऽपि नूनम् ॥ ४३ ॥

यदापगागारचकोरशावाः
शैवालिभङ्गेषु सुधांशुबिम्बम्

खिद्यन्ति मुग्धाः प्रसमीक्ष्य नूनं
तमोनिगीर्णोऽयमिति स्म युद्धे ॥ ४४ ॥

यदूर्मिमालासु विलक्ष्यमाणो
नभोमणिर्म्लानकुशेशयानि ।
क्वापि समाश्वासयितुं प्रियाणि
व्यराजत प्राप्त इव ध्रुवं हि ॥ ४५ ॥

सेयं हि गङ्गा विलसत्तरङ्गा
गाङ्गेयपङ्केरुहराजदङ्गा ।
विद्रावितस्नातृजनाघपूगा
सम्प्राप्तगोविन्दपदाब्जसङ्गा ॥ ४६ ॥

ततोऽयमनुज्ञाप्य द्विजपुङ्गवान् निमज्ज्य तस्यां समवत्यु-न्मेषं तत्तीरराजमानपङ्कजतुलसीकुसुमादिभिरभ्यर्च्य भगवन्तं रामभद्रं सन्निधाने तस्य समगायत सुरतटिनीमहिमाविवरणकारणं श्रौवादिकं चित्रं चरित्रम् ॥

बदरीवनमाययौ ततो या
नरनारायणसेवनोत्सुकः ।
अवगाहितुमेष तत्र भान्तीं
त्रिबुधानां तटिनीमटीकत ॥ ४७ ॥

विपश्चिकातापससेव्यमानं
नारायणं चाथ नरं स्वनाथम् ।
नत्वा तपस्यन्तमयं महान्तं
नितान्तमानन्दितमानसोऽभूत् ॥ ४८ ॥

उपेक्ष्य केदारमुदारचेता
मुदा स नारायणमादिदेवम् ।
नरं च संस्तूय विचित्रगीर्भि-
स्तं तत्प्रसादं समवाप्य मूर्ध्ना ॥ ४९ ॥

तत्र च विलसच्छ्रीवृक्षावलिमध्योल्लासितं, पारावारमिव पर्वतजातासङ्गकुतूहलं, पारायणमिव कृतसाधुजनावनं विरचितमनसिजविजयं च, भद्रसेनमिवारूढवृषभं भगवन्तं महादेवं सम्प्रणम्य स नितान्तमाससाद पुनर्हरिद्वारम् ॥

अथ यत्र देवतटिनीतटास्थितं
नगरात्रसत्रमभवत् परीक्षितः ।
अयमेव केवलमयाच्छुकाश्रमं
न गुरुः शुकश्च समगात् समाश्रमम् ॥ ५० ॥

धर्मात्मजस्य पुरदर्शनात्पठन्
हर्षी तदीयचरितान्यनन्तरम् ।
रम्यं पुरं न समगाद् गुरुः परं
रौक्माङ्गदं गुरुकरोऽप्यगात्तदा ॥ ५१ ॥

आलोक्य तत् सद्गुणसागरो गुरुः
पाञ्चालिकाजन्मभुवं समाययौ ।
काम्पिल्यनाम्नीं नगरीं निरीक्ष्य तां
मध्येपथं प्राप ततः स गण्डकीम् ॥ ५२ ॥

तदनन्तरं गण्डकीपण्डने सालग्रामकुण्डे निमज्ज्य मुहुर्मुहुरार्षभभरतवत् त्रिषवणस्नानार्द्रकपिशजटाकलापः तत्रत्यभगवत्प्रतिमाः परिचर्याभिः अपरिमिताभिराराध्य समगायत भारतं चरितं यातश्च ततो हयग्रीवावतारस्थलम् ॥

संसेव्य देवं स तुरङ्गमास्यं
भक्त्यान्तरङ्गे च तमाकलय्य ।
उदारसाहित्यकलाचकास-
त्तरङ्गिणीकामुकतामयासीत् ॥ ५३ ॥

तदनु स गुरुरवगाह्य तटिनीं करतोयां तीर्त्वा बहुवनसिन्धुरं यासिन्धुरुद्वीक्ष्य चोटजमुद्दालकस्य कतिपयदिवसैरासाद्य मैथिलं देशं

तत्र च साश्चर्यं रामभद्रविनिर्भिन्नभवानीवल्लभभल्लासनखण्डावभिवीक्षमाणो निदानमपि तस्य संस्मरन् आनन्दरससान्द्रीकृतमानसः समाससाद मन्दिरं रघुनन्दनस्य ।

सीतारामगुरूत्तमस्तदनु तं संसेव्य सीतापतिं
यातो नैमिशकाननं मुनिगणैः सम्पूर्णमत्यद्भुतम् ।
तत्रत्याखिलनिर्जरानतपदः सत्रा स तत्रानुगैः
श्रीमत्पक्षशिलाध्वरं समकरोत्सीतेशभक्ताग्रणीः ॥ ५४ ॥

तदनु देविकोत्सं खनिपङ्क्तिमिव मीनोपेतामूर्जस्वतीमिव कविकान्तां सुग्रीवसेनामिव कुमुदोद्भासमानामवगाह्य सरयूसरितं भुवनत्रयभासमानावदातयशोराशिभरताराधितसम्प्राप्तलोकत्रयाधिपत्यसीतापतिमणिपादुकाधिष्ठितमभितोऽवलोक्य नन्दिग्रामं सुरनगरीमिव रम्भाभिरामां कमलिनीमिव सराजहंसामयोध्यां नाम पुरीमासाद्य समाराधितः सज्जनैर्निशाम्य समन्ततस्तां ससन्तोषं समासेव्य भगवन्तं रामभद्रं विचित्रतरं तच्चरित्रमपाठीदेवम् ।

एनां पुरीमधिवसन्नवनीं समस्तां
राजा पुरा दशरथोऽतिरथः शशास ।
कामं स तन्त्रतटिनीपतिपारदृश्वा
कारुण्यभूः सुरवरेशनिषेविताङ्घ्रिः ॥ ५५ ॥

तस्य च पुत्राभिलाषिणः समतिक्रान्ते च शरदां षष्टिसहस्रे मृगीसम्भवः स मुनिपुङ्गवस्तुरङ्गमेधमङ्गजकामेष्टिमपि निर्वर्तयामास कृपया ॥

तदानीं तु वितानसम्भवेन तप्तकाञ्चनसप्रभेण प्राजापत्येन देवोत्तमेन दत्तं कृपया परिगृह्य पायसं दिव्यं सरभसमादरेण रमणीभ्यः समदात् सैष दशरथः सतोषम् ॥

पायसामृतरसस्य तदानीं
प्राशनाद्दशरथप्रणयिन्यः ।
कोसलाधिपराजसुताद्या-
स्ता बभूवुरथ दौहृदवत्यः ॥ ५६ ॥

काले ततः प्रसुषुवे रघुनाथमेनं
सा कोसलेन्द्रतनया रमणी प्रयाते ।
मेषाख्यराशिममरेशगुरौ सचन्द्रे
लग्ने शुभे कटकनाम्नि तिथौ नवम्याम् ॥ ५७ ॥

पुष्ये जजान भरतो महतां महिष्ठो
रामानुजोऽजनि ततो भरतानुवर्ती ।
शत्रुघ्न एष च दिशादश[illegible]राजमान
कीर्तिप्रभावमहिता अभवन् ततस्ते ॥ ५८ ॥

अथ कदाचित् तपःपावकच्छटाभिरिव जटाभिरभिमण्डितः, कविमिव भरताग्रजं, शशिनमिव लक्ष्मणानुगतं, त्रिविकलत्रमिव विबुधाभिवन्दितं, इन्द्रात्मजमिव जयन्तं, सु[illegible]कान्तमिव गाङ्गेया-भरणशालिनं भगवन्तं रामभद्रं निखिलनिशाचरनिर्यापणधुरन्धरं मन्यमानोऽयं विश्वामित्रो निजमखविघ्नाचरणकुशलान् [illegible]माहूय व्रजन् सलक्ष्मणं रामं ताटकाविजयाय चोदयामास ।

तदनु कृतान्तपुरि [illegible]परिशोधनायेव निशाचरनिखिलप्राणपवनपारणस्य प्राणाहुतिमिव कृत्वा [illegible]-रुतान् तां यापयामास कृतान्तपुरीरक्ष्यां मुनिवराध्वरपालनसकलास्त्रस्य भगवतो रामचन्द्रस्य शरजालसङ्घः ॥

ततो निर्वर्तितमुन्यध्वरः स्वपादपङ्कजरजसा नारीकृतशिलातलः स हि दाशरथिरधिगत्य जनकराजपुरं विरचितत्र्यम्बकचापभङ्गः कृतभूपमदभङ्गः सीतामुवाह सत्यवानिव सावित्रीम् ॥

तदैव तदनुजा भरतलक्ष्मणशत्रुघ्ना अपि माण्डव्यूर्मिला श्रुतकीर्तीरुदूहुः ॥

ततः कनकपीठोपरि राजमानः सीतासहितः स हि दाशरथि-रचञ्चलचञ्चलो मेरुसमारूढो जलद इव रेजे ॥

तदनु कतिपयदिवसेषु यातेषु—

सीतासमेतो विनतासुतध्वजो
नाथो रघूणां लसमानकौस्तुभः ।
तत्रानुजैर्मानववंशमौक्तिकं
स्वीयं पुरं गन्तुमियेष मैथिलात् ॥ ५९ ॥

प्रस्थाय ततो जनकराजपुरतस्तदनुज्ञातः —

मध्येपथं रघुपतिः स हि जामदग्न्यं
पृथ्वीशपाटनपटिष्ठपरश्वधं तम् ।
जित्वा प्रगृह्य वरकार्मुकमस्य धीरः
स्वीयं पुरं समगमत्सह बन्धुवर्गैः ॥ ६० ॥

तदनु सदारः स हि दाशरथिः सहितश्च तादृशैः सोदरैरुदारकर्मभिः मातङ्गशताङ्गतुरङ्गमपादातव्रातसमुद्भासितां वलरिपुनीलोपलप्रमुखमणिसौधावलिसमुल्लसितां नानाविधवाद्यवादकगायकैर्मारुतकम्पितकैतवादपहसद्भिरिव सुपर्वनगरश्रियं 'एकः स्वादु न भुञ्जीत' इति वाक्यार्थनिर्णयेनाभिगतवैवाहिकभावुकभासुररामभद्रसन्दर्शनार्थमाकारयद्भिरिव च नाकाधिपान् कार्तस्वरकेतुदण्डसमुद्भासितैः पताकिकासङ्घातैरुद्धाहवैभवसमुद्भासमानः सुसन्दर्शनसमुत्सुकाभिर्भामिनीभिरप्याराधयन्तीभिरारात्रिकाभिः प्रतिभवनमुल्लसन्तीं विविधविचित्रतरतोरणरमणीयां प्रादक्षिण्येन पुरीमशोभ्यां प्रतिपदमाराध्यमानो मेदिनीनायकैस्तोष्टूयमानश्च पुराणवाणीपारायणनिपुणैर्धरणीगीर्वाणगणै रमणीयतमं सदनं निजमाससाद ॥

चामीकरस्फाटिकभित्तिसंयुतं
यद्विद्रुमस्तम्भसहस्रशोभितम् ।
लेखेशनीलाश्मकृताधिरोहणी-
राजत्खगेशोपलकुट्टिमोल्लसत् ॥ ६१ ॥

मुक्तामयैः पल्लवितैश्च तोरणै-
श्चित्रैर्विचित्रैर्मणिसौधपङ्क्तिभिः ।
अम्भोजराजत्सरसीसमुज्ज्वलै-
रुद्भासितं केलिवनैर्मनोहरैः ॥ ६२ ॥

माणिक्यदीपैर्वरकाञ्चनासनै-
र्दन्तैश्च मञ्चैर्वररत्नचित्रितैः ।
संराजितं यत्र सुपर्वपुङ्गवाः
संरेजिरे सौधनिवासिनो जनाः ॥ ६३ ॥

तस्मिन् (ग्र ? गृ)हे भूसुतया समेतः
सिंहासनस्थो रघुवीर एषः ।
रेजेऽनुजैः सादरमीक्ष्यमाण-
स्तपोधनाराधनजागरूकः ॥ ६४ ॥

अथ कदाचित्सोऽयं सीतापतिः, सदारान् सुतान् सादरमवलोकमानमनुरञ्जितजगत्त्रितयं निखिलभुवननायकमात्मानं निजभुवनमात्राधिपत्येऽभिषिषिक्षुं बृन्दारकसुन्दरीनन्दनीयसौन्दर्यकेकयनरेन्द्रनन्दनावरद्वयदामबद्धं दशरथमवलोक्य दयया मुमोचयिषुः सादरं धृतचीरवासाः सन्मित्रमयं ससौमित्रिः सकान्तः कान्ताररराज्यं कतिपयकालमुररीकृत्य प्रस्थाय ततः साकेताद् अधिगत्य शृङ्गिबेरपुरं सदाशिव इव गुहोपचारितः तीर्त्वा च भागीरथीं, गत्वा च भरद्वाजाश्रमं, नत्वा च तं मुनिवरं कृतातिथ्यं यात्वा च त्रिविचित्रकटकं चित्रकूटं भगवता प्राचेतसमुनिना प्रतिदिनमाराधितः सादरं सदारसोदरः परिज्ञातस्वप्रयाणमवाप्तसन्तापमात्मनोऽटवीगमननिवर्तनाय समागतं सानुनयं कृतनैकावनतिं ससामाजिकजनजातं सानुजातं सम्पृष्टस्वागतं परिपूर्णकृपावलोकैरवलोकितं तत्रत्यमुदन्तं निवेदयन्तं दृष्ट्वा तमनुजातं भरतं समाधाय विविधैरुपायैः साधयित्वा चात्मनो वनगमनं दत्त्वा च पादुकोभयं कृत्वा च प्रतिज्ञां जवादायास्यामीति यापयित्वा च कृच्छ्रतस्तं

स्थित्वा च तत्र कतिचिद्दिनानि प्रस्थाय ततश्चित्रकूटात् समगमदश्रमम-
त्र्याश्रमम् ॥

रघुपतिः प्रियया सह सोऽगम-
स्तदनु सादरसोदरसंयुतः ।
दवममन्दसुपादपवारिता-
तपमतीव भयावहमद्भुतम् ॥ ६५ ॥

सकलतापसमन्दिरसञ्चयै-
र्बहुतरं रमणीयममानुपम् ।
विलसितं सततं द्विजयुग्मकै-
र्हरिमुखैश्च मृगैरतिभीपणैः ॥ ६६ ॥

फलभरानमिताः पृथिवीरुहो
रघुपतेरिव सन्नतिसोद्यमाः ।
अभिविरेजुरिमे रणितद्विजा
घनितपाटलकोमलकुड्मलाः ॥ ६७ ॥

तदनन्तरं वन्दारुजनमन्दारो मेदिनीनन्दनानन्दनो नरदेवनन्दनः संहृत्य सापराधं विराधं, कृतपञ्चशरशरभङ्गं शरभङ्गं सुतीक्ष्णधिषणं सुतीक्ष्णं संयमीन्द्रसभाभासमानं भगवन्तमभीकं लोपामुद्राभीकं नमस्कृत्य च तत्सग्प्राधनतः प्रतिज्ञातनिशाटवधः द्विपश्वाननबान्धवान् क्रौञ्चगणान् विरचयितुं सहितानहितान् पञ्चतया सुरतायाः पञ्चवटीकृतनिकेतनः लक्ष्मणेन विग्रीकारयन्नुग्रां रक्षोध्यक्षानुजां, समाह(तु ? त)मिव तदग्रजन्मानं पापजन्मानं पौलस्त्यजन्मानं त्रिशिरसमप्याशिरसं विरचय्य, कृत्वा च खरतरं खरं खरशरविनिर्भिन्नं, रचयन् दूषणादीन् कृतान्तपट्टणाध्वनीनान्, मृगयाविहरन्महीनायक इव संहृतसुवर्णहरिणः, वणिगिव सीतावियोगकर्शितमनाः, संहृतकबन्धोऽपि सम्प्राप्तवीरयशाः शनैः शनैरासमाद शबर्याश्रमम् ।

तदनु समनुगृह्य शबरीं चिरसञ्चितबदरीप्रमुखफलादनतो दत्वा च तस्यै निजपदं मेदिनीनन्दनाविरहजातज्वरोऽनुयाय्यनुजो जगतीपतिर्यातुमियेष (सतां ?) सतांपतिः पम्पाम् ।

करोति प्रातिलोम्येन स्वनाम्ना पापमेव या ।
पम्पां स रामस्तां रामातापतप्तः समागमत् ॥ ६८ ॥

तदानीं खल्वाहवलालसरसापरिपालक इव समनुगृहीताङ्गभूः, देवकीतनयशताङ्ग इव सम्प्राप्तसुग्रीवानुबन्धः, रविरिव सङ्कुचिततारेश-प्रकाशः, महाबलिरिव दिशादशानियोपितहरिसैन्यः, भगीरथेनेव समु-त्तीर्णसागरेण समाश्वासितया सीताभूर्मिकासमर्पणाद्रामस्य, विषमपथेनेव क्षपिताक्षरथेन प्रहस्तादीन् कृतवता विहस्तादीन् विरुतमात्रवित्रा-सितरात्रिञ्चरराजेन लङ्कापुरपतिनिबन्धेन चिरोपोषितानिजतातसखस्य निनीषुणेव पारणामपुरानुभूतां सवर्ग्म समारुरुक्षुणेव दिवं दीक्षितेन लङ्कापुरकमनीयकङ्कचयनानिजसमर्पितानापशुत्वपासमोस्वादनतः प्र-जातजातवेदःपरितोषणप्रवीणेन समुपक्रान्तक्रत्वन्तरपरित्यक्तपिशिता-शपशुत्वपाश्रपणसमापतितसुकृतेतरपरिहृतय इव वारंवारं रामरामेति समीरयता निजदासवरेण समीरसुतेन निवेदितसकलसीताकुशलोदन्त-स्तदानीतावदातानिजवानितोत्तंससन्दर्शनसद्भूतमोदस्तदैव पत्रीकृत-मातरिश्वतनयः, वासुदेव इव ससुग्रीवाङ्गदः, अभिनवप्रासाद इव प्रोल्लसद्गवाक्षः, हिमानीधरगुहान्त इव हर्यक्षरक्षितपुरःप्रदेशः, निशा-नाथ इव लक्ष्मणानुगतकान्तवपुः कुमुदामोदकरश्च, धर्मात्मज इव सदा ससमीरणात्मजः आश्रितजनसन्तापदावपावकशमनपाथःप्रदः दशशताङ्गदायादो निजपूर्वजयनिर्मितामिवानमुद्रामिवावर्तपङ्क्तिं समा-दधतः समुपाविशदम्भोनिधेस्तीरे सहसोदर ॥

तदनन्तरं तिरस्कृताक्षेपभगवत्प्रियनिकेतनाग्रतास्तिरस्कृत्य तम-ग्रतोजातमनन्यशरणं शरणीकृतनिजचरणं सज्जनावलितोषणं रम-णीयगुणभूषणं रिपुजनभीषणं विभीषणं विधाय च लङ्कापुराचञ्चला-धिराजं स्वकटाक्षमात्रसंशिक्षितक्षितिभृदुद्भवाभ्यक्षस्तद्रोषविषयीकृत-शरणागतवरुणालयनिर्दिश्यमानद्रुमकुल्यदेशीयः विभीषणनिर्वर्ण्यमान-लङ्कापुरपन्थाः क्रमेण सेतुं विधाय नलेन मार्गेण इव दक्षिणाशाभि-मुखः दशमुखप्रमुखलेखारीन् पत्तनं निनीषुर्वैकर्तनस्य वैकर्तनकुल-जलधिकलानिधिराससाद लङ्कामलङ्कारवतीम् ॥

तदनु सानुजो जानकीजानिः झर्त्रेन् सुरान्तकनरान्तकावन्तकान्तिकौ, विध्वंसयन् कुम्भनिकुम्भौ, विरचयन् दुर्मुखं विमुखमतिकायमपि विकाययन्, अकम्पनं च कम्पयन्, विरूपयन्विरूपाक्षयूपाक्षौ हत्वा च कुम्भकर्णादीन् जित्वा च मेघवाहजितं मेघनादं दशकण्ठकण्ठोद्दलनाय समाहितो बभूव ॥

तदानीं खलु—

अमर्त्यराजस्तरसा स्वदूतं
समादिशद्दाशरथेः समीपम् ।
शताङ्गमेतच्छतवाजिनद्धं
नयेति युद्धे पदचारिणोऽस्य ॥ ६९ ॥

तदनु सविनयं निवेदितमेतच्छताङ्गं तुङ्गतरतुरङ्गमानीय मातलिना समधिरुह्य धराभरधरधीरो धराभूधवः स्वकलत्रापहर्त्रा रात्रिञ्चरनेत्रा समायोध्य समं द्वन्द्वेन वैनतेयेन वातन्धयं, सौरेण तामिस्रं, पाशुपतेन दैतेयं, पार्जन्येन जातवेदसं, वैष्णवेन माहेश्वरं चास्त्रमस्त्रेण भिन्दन् सप्तदिनान्यसमाप्तशस्त्राहवाग्रहः शिताग्रसुधामयूखशिलीमुखमुखविखण्डिततुण्डावलोकनात् क्षपन्तं तं जगत्त्रितयामित्रेतरं पौलस्त्यभित्रं कमपि कपिमण्डलीखण्डनं दशतुण्डमेनं समाश्वासयितुमिव सौमित्रिसायकसमवाप्ततोदनं नन्दनीयनिजनन्दनं नन्दनेशजितं तदीयपदवीं निनाय तमनयं न्यायतः पितामहास्त्रतः ॥

अथ खलु स एष दशरथिरभिवृष्टः सुमनोभिः सुमनोभिर्विरचय्य विभीषणं लङ्कापुरेशं परिगृह्य रामां विनयाभिरामां सकलकल्याणगुणार्णसां निधी रामचन्द्रः समारूढवानरर्क्षरक्षोगणं सरोवरमिव लक्ष्मणाभिरा(मां?मं) विविमिव हंसयानमधिरुह्य विमानं पुष्पकं नाम समवलोक्य समन्तात् लङ्कापुरमयि भूमिसमुद्भवे! विभीषणभवनमिदं जितरम्भोरु! सेतुसमारम्भणस्थलमिदं जितपङ्कजपादे! पम्पासर इदं जनकनन्दिनि! जनस्थानमिदं कुम्भिकुम्भस्तनि! कुम्भसम्भवायतनमिदं विधुमुखि! विराधविध्वंसनचारित्रीयमिति च विविधाः कथाः कथयन्नाससाद नन्दिग्रामं पुरतः समागतभरतायोध्यकसहितः ॥

तदानीं खलु स्वपादसारससमासेवननिरतं भरतमर्थिसार्थप्रार्थितार्थसमर्थनसमर्थतमपाणिपाथोभवसमुत्थापितं समालिङ्ग्य सुचिरमवाप्तसर्वार्थः मराळविरळेतरपार्श्वयुगलपर्जन्य इव वालव्यजनसंवीज्यमानः चिरतरपरिचयतः समनुभवेयं रामाननोपमानमोदमिति सततसेवमानेनेव वनितायुतेन तारकापतिना तारराजितसितातपत्रेण संशोभमानः सानुग्रहमवलोकयन् रक्षःप्लवगऋक्षाधिपतीन् अरुणतानुबन्धतो विनतात्मजाय तरणिरथसारथ्यश्रमविश्रान्तिवितरणायेव तदीयतुङ्गतरतुरङ्गमान् सञ्चोदयन्तीभिः निजाञ्चलैर्विचित्राभिरपि सचित्राभिः पताकिकाभिः प्रतिभवनमुल्लासमानां, तारागणैरिव लसमानहस्तश्रवणैरिन्दिराव्यापारैरिव दानवारिमनोहरैर्मातङ्गैरुल्लसन्तीं सागरैरिव सावर्तैः शुक्तियुक्तैश्च कुम्भकारभवनैरिव भासमानभाण्डैः सन्तानादिभिरिव सिन्धुसम्भवैस्तुरङ्गैः समुल्लासमानां, महाहृदैरिवावदाततरवारिभिः सत्कविकाव्यप्रबन्धैरिव बाणसरणिमाश्रितैः धानुष्कधुर्यवत् घणघणायमानकोदण्डैः सार्वभौमभवनैरिव सदारामाश्रयैः, बलिस्मरणैरिव विलसद्वारवाणैः पादातवर्गैरतिरमणीयां प्रविश्य पुरीमयोध्यां तत्र तत्र परिपूजितः सज्जनैः निर्जरेश इव निजनगरीं सदनं निजमाससाद मेदिनीतनयासहितः स हि दाशरथिः ॥

स दारपरिमोदाय निजागमनमङ्गलम् ।
श्वश्रूनिवेदनायेव ववन्दे प्रसुवं तदा ॥ ७० ॥

तदनन्तरं वसिष्ठप्रमुखाः परमर्षयः भगवतः सीतापतेर्भविष्यत्यद्य सार्वभौममहाभिषेक इति सहर्षेषु सर्ववर्षपुरुषेषु, वर्षत्सु पुष्पवर्षममरवर्येषु, गायत्सु सुतरां सुरगायकेषु, नृत्यन्तीषु च सुरवरपुरपुरन्ध्रीषु, सुरनरवरताड्यमानभेरीतूर्यानकदुन्दुभिवीणावेणुपणवपटहमृदङ्गझल्लरीमुखप्रमुखवाद्यध्वानिप्रध्वानितेषु दशादिशान्तेषु बहुतररत्नपरिचित्रितपञ्चाननासनसमारूढं समभ्यषिञ्चन् प्लवगपरिवृढसमानीतसरितांपतिसलिलैः सीतासमेतं रामचन्द्रं त्रिजगत्यधिपं वसुमत्याधिपत्ये ॥

तदा खलु शतमखमुखा लेखेश्वराः पद्मरागगारुत्मतमारकतेन्द्रनीलमहानीलवैडूर्यविद्रुममौक्तिकप्रमुखरत्नावलिचकासत्काञ्चनकाञ्चीमकुट

कटककुण्डलादिविविधभूषणवरपरिमण्डितं तं पुण्डरीकाक्षमभ्यभूषयंश्च भूषणवरैः पुनरप्यनुरागतो रघुवीरम् ॥

मेखलालपनभासुरतारा
रेजिरे रघुपतेरुदरस्थाः ।
निर्गता अनवकाशतयान्त-
र्ह्यण्डपोतनिचया इव तस्य ॥ ७१ ॥

तदनन्तरं कलानिधाविव कुवलयोल्लासके, विन्ध्यमहीध्र इव राजहंससंसेव्यमाने, नन्दनन्दन इव सुकरसन्धृतगोत्रे, रत्नाकर इव वाहिनीशे, त्रिदशेन्द्र इव सनन्दने, वासिष्ठ इव धरानन्दनेशनन्दनीयगुणे, दिनमणिवनयान्वयदुग्धाम्बुधिसुधादीधितौ धरणीतनयारमणे भगवति रघुवीरे नितरामनुशासति वसुधासाचण्डदीधितिकरप्रवेश्ये सुकृत-निरतेषु च जगतीजनेषु, निस्तापत्रये च जगत्त्रितये, निष्कृतौ च कृतान्ते, ससुमफलेषु च रसोद्भवेषु, निर्मलपूरभरितासु च सरित्सु, सुप्र-जस्सु च सकलासु प्रजासु सम्प्राप्तसकलकामेषु च लोकेषु, कुटिलता कुन्तलेषु, दण्डः छत्रेषु, अरियोगः स्यन्दनमकरन्दारविन्देषु, अङ्गरहितता रतिकान्ते, सरोगता सारसेषु, स्नेहहानिः प्राक्तनपिण्याक-पिण्डेषु, अशरणता रावणस्य, अशोकनाशः पिशिताशपुरे, विग्रह-प्रयोगः काव्यपाठे, अपार्थता धार्तराष्ट्रेषु, शल्यभेदनं कुरुक्षेत्रे, चाप-त्यागो मकरारूरुक्षुमार्ताण्डस्य न क्षत्रजनस्य, मुकुलीभावः कुड्मलेषु कुवलयासन्तोषः प्रभाकरप्रकाशे, सचमवारणबन्धनमनन्तेशनिशान्ते, चण्डकरत्वं भानुमालिनि, शरभेदो वप्रेषु, मन्दानुरागः छायाप्रिये, मार्गणसञ्चारो रणेषु न जनपदेषु, राजपीडनं पङ्कजाम्बरेषु न जनेष्विति परमेवं व्यवस्थितम् ॥

रघुवरचित्रचरित्रं देशिकवर्यः स वर्णयन्नेवम् ।
तच्छ्रुतिजातामोदैः सज्जनजातैः समीडितो ह्यासीत् ॥ ७२ ॥

इति सीतारामसूरिविरचिते कविमनोरञ्जके
द्वितीयोल्लासः ॥

## अथ तृतीयोल्लासः ।

स्तुत्वा ततो रघुपतिं निजवाग्विलासै-
रुल्लासमानमहिळं बहुळप्रमोदः ।
वैकर्तनान्वयपयोनिधिपूर्णचन्द्रं
प्रायादजामिलजनिक्षितिमार्य एषः ॥ १ ॥

अजामिलमुनेर्गाथामगायत शुकेरिताम् ।
कमलाकमितुर्नाम्नां सोऽयं माहात्म्यसूचिकाम् ॥ २ ॥

इत्थमत्यर्थं सम्भावयमानो रामभद्रनामवैभवं समभिययौ ब्रह्मावर्ताभिधानं क्षेत्रं यत्र च ऋषभः सत्रमचीकरत् ॥

शृङ्गिबेरपुरं तस्मात्सोऽयमस्मद्गुरुर्महान् ।
गाम्भीर्येऽम्भोनिधिसमः समगात्सज्जनाग्रणीः ॥ ३ ॥

ततः खलु कृष्णमिव कालिन्दीसहितं, धातारमिव सरस्वती-समुल्लासितं, गुहमिव बर्हिमुखवाहिनीसङ्गदं, अश्वमेधमिव प्रयागं समधिगत्य तं क्षेत्रवरं त्रिवेणीसङ्गमसवनत्रयावगाहनकपिशीकृतवेणी-कलापः सोऽयमनवीनकलाकलापो मासमुवास सहस्यम् । तदनु समगाद्विचित्रकटकं चित्रकूटम् ॥

देशिकस्तत्र संसेव्य समीरणसुतं मुदा ।
यादसांपतिदायादमद्राक्षीत्तापसेश्वरम् ॥ ४ ॥

काशीमवाप गुरुरेष गुणैकराशि-
स्तस्माद्विचित्रकटकादथ चित्रकूटात् ।
भागीरथी हरिपदाम्बुजसङ्गपूता
पूतीकृतत्रिभुवना प्रचकास्ति यस्याम् ॥ ५ ॥

पावमानिपुरोभागे भासमानां शुभावहाम् ।
भागीरथीमभिययावथायमवगाहितुम् ॥ ६ ॥

तदा खलु देशिकोऽयं समवगाह्य मुहुर्मुहुर्वाहिनीं बर्हिर्मुखाणां समाराध्य तं भगवन्तं धरणीतनयारमणं, चन्द्रमसमिव सोमं मण्डलेशमिव महासेनालङ्कृतपार्श्वभागं भोगाङ्कितं च, उग्रमप्यनुग्रं प्रागुत्तरदिङ्मात्रनाथमपि विश्वनाथं स्वयमुपनताणिमादिमनिखिलैश्वर्यसनाथं नाथमानजनमनोरथपरिपालनदक्षं दक्षाध्वरविध्वंसिनं सह निजपरिषदैः समीरयन्तं राम रामेति निरन्तरं तं भगवन्तं सदाशिवं शिवं प्रदक्षिणीकृत्य नमस्कृत्य समस्तावीत् ॥

तदनन्तरम् —

यद्गोपुराग्रप्रतिमा लसन्त्यो
वराणसीग्रस्य विलोकनाय ।
समागता विश्रमितुं निषण्णा
मध्येपथं स्वर्गिवरा इवासन् ॥ ७ ॥

यत्सौधकूटालयसालभञ्जिका
गीर्वाणराड्लोकजिगीषयानया ।
सञ्चोदिता यान्त्य उपर्युपर्यलं
राजन्ति सेना इव शस्त्रपाणयः ॥ ८ ॥

यच्चन्द्रशालालयसालभञ्जिका-
श्चन्द्राश्मभृङ्गारकरा विरेजिरे ।
सम्पाद्य चन्द्रादमृतं प्रदित्सवो
वाराणसीवासिजनेभ्य आदरात् ॥ ९ ॥

वाजिनीलमणिसौधसङ्कुलं
व्योम वीक्ष्य नवनीरदावृतम् ।
भानुतापपरितप्तचातका
भेजिरे मुदमतीव यत्पुरि ॥ १० ॥

पण्यवीथिषु घरट्टजं रवं
सर्वतः प्रसृमरं मनोहरम् ।
नीलकण्ठनिवहा निशम्य ते
लेभिरेऽभ्ररवशङ्कया मुदम् ॥ ११ ॥

घटीवधूट्यः खलु यत्र पुर्या
भुजावबन्धेन निपीडयन्ति ।
अतस्तगाङ्गेयघटं कुचानां
विजेतुकामा रिपुशङ्कयेव ॥ १२ ॥

विश्वेशसेवासमये परस्परं
सङ्घर्षजस्वेदपयःपरम्पराम् ।
प्रापुस्तरां साधनतां व्यपोहितुं
यस्यां पताकास्त्रिदिवौकसामपि ॥ १३ ॥

वरणतरणिराजत्पुत्रिका नाविकेन्द्रा
गृहगणसरिदीशे सन्तरन्तीव यस्याम् ।
विमलकनककेतुक्षेपणीभिर्धृताभिः
सुकृतशुभसमीरे सौधकल्लोलजाले ॥ १४ ॥

वाराणसीं तां नगरीं समन्तात्
समीक्ष्य तस्यां गुरुसार्वभौमः ।
मासानवात्सीन्नवकं समोदं
समीरसूनोः सविधे महात्मा ॥ १५ ॥

ततः परं पङ्कजाक्षपदपङ्कजपरिपूजनजातामोदो देशिकोऽयमसंस्पृश्य सिन्धुं सुकृतक्षपणामवगाह्य शोणभद्राभिधानां धुनीमभिययौ गयाभिधानं क्षेत्रम् ॥

अथ खल्वभिषिच्य पदं विष्णोः आभिषेचनिकैः कलशैरभ्यर्च्य तुलसीकुसुमादिभिः कुम्भसम्भवभापितसंहृतब्रह्माण्डभेदनसम्भृतसम्भ्रमकूटसहस्रं शृङ्गिबेरपुरमिव गुहाभिगमं कैलासमिव शिवायतनं, बार्हिमुखलोकमिव हरिहयकान्तं, (पु? पौ)लस्त्यमिव रञ्जितार्जुनं, मनुवंशमिवेक्ष्वाकुकमनीयं, समाश्रितपिशिताशपुरकान्ताररामभद्रदारैरिव कुवेणीरमणीयैर्जलाशयैः समुल्लासितं, अकुलीनमपि सद्वंशसम्भूतिं,

भीममपि कीलकोल्लासकं, सरोवरमिव राजत्पुण्डरीकं समतीत्य विन्ध्यं धरमवलोकितवङ्गदेशो देशिकः पुरुषोत्तमसिसेविषुराजगाम जगन्नाथम् ॥

इहामनन्तीति गतस्य देहिनः
करस्थिता मुक्तिरनन्तशायिने ।
निवेदितान्नादिलवाशनं बुधा
जनार्जितैनःकुलतूलपावकम् ॥ १६ ॥

तं मुदा देशिकोऽस्माकं ववन्दे पुरुषोत्तमम् ।
दारुसन्निहितं देवं सुभद्रासीरिसंयुतम् ॥ १७ ॥

तुष्टाव सन्तुष्टमनस्क एष
इष्टार्थसिद्ध्यै मुनिभिः समिष्टम् ।
क्लिष्टं पिनष्टि स्थिरमाश्रितानां
यस्तं निजेष्टं ददतं सुहृष्टम् ॥ १८ ॥

योऽन्तः प्रविष्टो जगदिन्द्रियाणि
वागादिकान्येष दयार्द्रदृष्ट्या ।
सञ्जीवयत्यद्भुतविक्रमस्य
गातुं क ईष्टेऽस्य गुणाननन्तान् ॥ १९ ॥

तदेतन्महसां बृन्दं प्रमोदं प्रददातु मे ।
उदारचरितस्यास्य सेवालालसचेतसे ॥ २० ॥

तदनन्तरं पतितपावनो गुरुः
स रथाङ्गमद्भुततमं तथाभिधम् ।
अभिवन्द्य तां विपणिवर्यशोभितां
नगरीं समीक्ष्य परितस्ततो ययौ ॥ २१ ॥

तदानीं खलु मेदिनीत्रिदशवन्दितपादारविन्दो देशिकोऽस्माकं मुकुलीभवदम्भोभवमध्यबद्धचरणेषु षट्चरणेषु, सदनसमुत्कण्ठेषु कल-

कण्ठेषु, कुमुदामोदनकिरणास्वादनाय सानन्देषु चातकवृन्देषु, अन्धकारबन्धनसमुत्सुककृष्णवर्त्मप्रविष्टपुष्करेष्टभानुष्विव विष्फुरत्सु दीपाङ्कुरेषु, महानन्देषु च कुमुदसन्दोहेषु, नन्दनवनेष्विव सञ्चरत्कौशिकेषु, दिक्चक्रेषु बर्हिर्मुखबल इव विहिततारकाप्रकाशे सन्ध्यासमये सप्ताविव सोच्चश्रवणे गगने सायन्तनसमयसमुदयसञ्जनितरात्रिदोषपरिहाराय सिन्धुनेव समाबद्धेन मणिना कुक्षिलक्ष्यमाणजाक्षितक्षणदान्धकारेण प्रोद्भासमाने, त्रिकालपङ्केरुह इव सुरवर्त्मगवाक्षस्य, स्फाटिकदर्पण इव दम्पतीजनलावण्यदर्शनस्य, फेनसन्दोह इव क्षणदाकलिन्दनन्दिन्याः, नन्दनीयतिलक इव पुरन्दरदिशासुन्दरीवदनारविन्दस्य, भारद्वाज इव कलशोद्भवे सार्वभौम इव भासमानकरप्रकरे मनोभूसार्वभौममहाभिषेकमणिपीठाकृतौ मन्दमन्दमनुविन्दति कुमुदबन्धावुदयमविन्दतायमान्ध्रदेशम् ॥

सुधादीधितिपादानां तदा सङ्गेन पुष्करम् ।
चकासितमभूदेतच्चित्रं धात्र्यां विजृम्भते ॥ २२ ॥

करैः समालिङ्ग्य सरोजिनी मां
भजेति राज्ञा परिसान्त्वितापि ।
सतीमणीनां चरितं जनानां
प्रदर्शयन्ती मुकुला बभूव ॥ २३ ॥

कुमुदं मुमुदे तदा विधोः
करसङ्गकुतूहलाद्यथा ।
प्रमदा पतिदेवला भृशं
चिरसङ्गतकान्तसङ्गमे ॥ २४ ॥

अहो खल्वेतद्देशीयजनस्य भाग्यवत्ता ।

यासां चाधरबिम्ब एव मधुरं पीयूषमास्ते मृषा
दुग्धाब्धाविति विश्ववाक्यममृतांशुश्चापि वक्रैर्जितः ।
जाताजातसुरोमराजिसहिताः कुम्भीन्द्रकुम्भस्तनी
रामा नायकसेवनैकनिरताः सम्प्राप्य राजन्त्यमी ॥ २५ ॥

तदनन्तरं कमलापतिकथया संसारकाननवदनायासादगणित-मृगखगगणाकीर्णानि धरणीधरकटककाननानि केलीलालससारसकुल-धवलच्छदनिलयायितकमलानि विमलानि अनिलचालितनीलोत्पल-कुलानि कूलविलसितघनशालिवनघनाह्लवविपुलफलालसमालतीमुखल-तासंवेष्टितनगमालोल्लसितान्यतिक्रम्य च तटिनीतटाकादीनि सानुगः समवलोकितमृगराजगिरिः समाजगाम सप्तगोदावरं स हि महा-नुभावः ॥

ततः स्थित्वा दिनानि सप्त स्नात्वा त्रिषवणं तत्र कृताह्निकः समधिगत्य रामभद्रालयं भद्राचलं भक्तवत्सलं सानुजं जानकीजानिं सम्प्रणम्य पुनः पुनः सप्रदक्षिणं वसन् स तत्र कतिचिद्दिनानि बल-मिव सकृष्णं युधिष्ठिरमिव भीमात्रभासितं कैलासमिव सत्र्यम्बक-मान्ध्रदेशमतिक्रम्य मनुसन्तानमिव सनरसिंहं काश्यपसूनुमिव प्रह्ला-दोत्पादकं गन्धर्वकुलमिव कलकण्ठोल्लसितं, मानससर इव सराज-हंसं द्रामिडाचार्यमिव वकुलभूषणं गोपालसङ्घमिव वृषभाचभासितं आश्रितजनमङ्गलदं मङ्गलगिरिमासाद्य समर्घ्यायेव कृपया भक्ताय सामिविभक्तपानकधनं हिरण्यहारिणमपि महानुभावं संसेव्य नर-सिंहं संस्तूय विविधैः स्तवैः सप्रदक्षिणं सम्प्रणम्य पानकतुलसीकुसु-मादिभिः समादाय शिरसा सादरं तत्प्रसादमवगाह्य जाम्बूनदवदनां नदीं तदनु समगात् श्यामवारणधरणीधरं धरकन्यारमणसिसेविषया ॥

तदनु देशिकोऽयमुदारचरितो मुदा परमया वन्दारुवृन्दमन्दा-रमिन्दिरारमणपादारविन्दगाथामरन्दसमास्वादनसम्भृतपरमानन्दमभि-वन्द्य देवदेवं महादेवं दर्भशयनप्रदेशमिव चिरन्तनकुञ्जराशनसम-लङ्कृतं, द्वारकापुरमिव, मन्मथोल्लासितमरविन्दबन्धुमिव सप्तपत्र-स्यन्दनोपेतं, दक्षिणपारावारमिव सेतुविराजितं, सुधर्मसभान्तरमिव सदेववल्लभं, नन्दनवनमिव कुसुमितपारिजातकं, हिमानीमहीधरकटक-मिव भासमानवानप्रस्थं, अनन्तशानिशान्तमिव तुङ्गतरमातङ्गं, त्रिदिवमिव दिवौकस्समुदायसमेतं, शनैश्चरमिव छायानन्दनं, क्रतुसङ्घातमिव सर्वतो-मुखसमुल्लासितं, कैलासमिव शङ्करप्रियभासमानं, प्रावृट्समयमिव साभ्र-

पुष्पं जीमूताविर्भावकारणं च, इन्द्राणीपर्यङ्कमिव कौशिककमनीयं, वासुदेवमिव रञ्जितमार्जुनं, बन्धविशेषमिव सर्वतोभद्रं, सुरेशनिशान्तमिव ऐरावतोल्लसन्तं, सत्यवन्तमिव गायत्रीकान्तं, दुग्धाम्भोधिमिवामृतोद्भवं, कार्मुकसङ्गोत्सुकितकामिनीसमाजमिवाभिनवमालिकाभासमानं, पश्चिमोत्तरहरि(ता ? द)न्तरमिव समीरणरमणीयं, दाशरथिमिव वैदेहीविलाससामोदं, भीमसेनमिवाधिगतबहुनागबलं, नृपतिसभान्तरमिव नटीलसमानं, नीलाम्बुजमिव चक्रमर्दकाह्लादकं, सन्मकरन्दारविन्दमिव नन्दनीयभृङ्गराजं, अलकापुरमिव सौगन्धिककमनीयं, स्कन्दमिव वल्लीविलसितं, कलशोदयसदनादिशान्तमिव पापविनाशशालिनं, प्रत्यक्पारावारमिव कुङ्कुमस्थलीसमुल्लसितं, गाङ्गेयधरणीधरमिव साकाशगङ्गं, तदुदञ्चराजमानपरंज्योतिस्सिलेदिषया समासाद समीरणजठरंभरिपरिपालकधरणीधरवरीणम् ॥

> अस्मद्देशिकदर्शनार्थमवनौ तं मार्गमाणश्चिरं
> प्राप्तं पङ्कजवासिनीसहचरं द्रष्टुं तदीयं परम् ।
> श्रुत्वा रम्यतदद्रिपादपवरानारुह्य वल्लीपथैः
> रेजे तस्य दिदृक्षया ऋतुमिषान्नूनं वसन्तस्तदा ॥ २६ ॥

तदानीं तु —

> शृङ्गारराज्ये स्वसखं वसन्तः
> स्वान्ते वसन्तं स किमभ्यषिञ्चत् ।
> मरन्दनिष्यन्दतरङ्गिणीना-
> मम्भोभिरेतं सुमनोधरिण्यः ॥ २७ ॥

> मदनाय तदा मुदा ददुः
> प्रमदाः प्रमदावहे उभे ।
> शितसायकयुग्मयोजिते
> धनुषी रुचिरे जयप्रदे ॥ २८ ॥

> अनिर्गलविकर्षणाद्गुणपणाय मार्गे रणे
> षडङ्घ्रिनिवासद्गुणं पदुमुपाजहाराद्भुतम् ।

वियोगिजनचेतसां विदलने स्मरक्ष्माभृते
सरोरुहशिलीमुखप्रथितमम्बुजिन्यादरात् ॥ २९ ॥

प्रमदाः प्रमोदभरतो
मनसिजराजे पुनस्तूणे ।
प्रददुर्ग्रावबरीणौ
वियोगिचेतोविदारणे निपुणौ ॥ ३० ॥

तद(त)नुसमरोपयोगिनीभिः
परिवृत एष तदा स्वनीकिनीभिः ।
त्रिभुवनविजयाय चित्तजन्मा
पवनशताङ्गमधिष्ठितः प्रतस्थे ॥ ३१ ॥

क्वचित्क्वचिन्मलयसमीरकैतवा-
द्वियोगिनां मनसि विषोल्बणानिलम् ।
अणूदरीनयनमरीचिकञ्चुको
विसृज्य तत्पथि विचचार वीतभीः ॥ ३२ ॥

सांयुगीनजनताग्रणीरयं
वल्लकीगणमणूदरीमयम् ।
नादयन् विरहिमानसं जवा-
दाचकर्ष मदनः स लीलया ॥ ३३ ॥

मधुव्रतवरूथिनीरणितवारिजातारवै-
र्मरालवरटाशुकस्वनविपञ्चिकानिक्वणैः ।
नदीनदसरोवरोल्लासितभङ्गपारम्परी-
ध्वनत्पटहडिण्डिमध्वनिभिराययौ तं स्मरः ॥ ३४ ॥

सारसोल्लसितसारसवाणी-
कैतवेन तटिनीतरुणीयम् ।
तं मुदा मदनभूभुजमेनं
स्वागतं किमिति पृष्टवतीव ॥ ३५ ॥

बहुपल्लवसेवनरञ्जितः
पिकवरः कलकूजितकैतवात् ।
मदनस्य जगद्विजयोल्लस-
द्विरुदवाक्यकदम्बमजूघुषत् ॥ ३६ ॥

राजते स खलु माधवागमे
कानने व्रततिवल्लवीजनः ।
प्राप्तमोद इव कुड्मलच्छला-
द्दन्तपङ्क्तिमनु सम्प्रदर्शयन् ॥ ३७ ॥

माधवस्य विविधेषु विलासे-
ष्वेधितेषु सुतरां व्यतिभाते ।
अद्भुतं हि कुरवो यदराज-
दर्जुनः सुमनसेत्यनुरूपम् ॥ ३८ ॥

समिन्धमाने सति माधवेऽलं
प्रमोदभारानभजन् धरेऽस्मिन् ।
माधव्य आसां खलु तस्य सङ्गमे
सतीमणीनामनुरूपमेतत् ॥ ३९ ॥

मधुनार्पितं मधुरपल्लवं तदा
परिभुज्य सादरममी पिकद्विजाः ।
जगदुः मणादमिषतो मुहुर्मुहुः
कुशलं सतां भक्तिरीदृशी खलु ॥ ४० ॥

गन्धचोर इति तं सदाचरं
दर्शित द्विजवरै रुतच्छलात् ।
माधवो मधुपशृङ्खलारवै-
राबबन्ध विश्रुतां प्रदर्शयन् ॥ ४१ ॥

अस्मदीप्सिततमां हरितं ते
तात एष करसञ्चरणोऽलम् ।
लिप्स्यतीति समवर्तिसमीपे
वक्तुकाम इव वाशुरथागात् ॥ ४२ ॥

वसन्तसमये तस्मिन् लसन्ती मधुपावलिः ।
आक्रम्य सुमनोव्रातं बुभुजे शीतमाध्वसम् ॥ ४२ ॥

तदानीं खल्वनिदानीन्तनगीर्वाणवेणीवतंसवाणीतरङ्गिणीवरणीयधोरणीधुरीणरमणीयचरणाग्रणीवरणीगीर्वाणगणसन्ततशरणीकरणारविन्दः प्रणतजनकामितवितरणगीर्वाणधरणीरुहायितकरुणारसवरुणालयशरणान्तःकरणो देशिकप्रवीणः दरीवरसमाप्तगीर्वाणरमणीतन्तन्यमानरमणीयतरगीताकर्णनाविदीर्णहृदयपथिकजनजाततापप्रशमनसमाश्रितसरसीरुहपर्यङ्कोल्लासिपर्यन्तशालिपर्यन्तशोभितं, सरसीरुहवासिनीनिवाससेवासमागतनगरीसमयनारीराजितकवरीकान्तिलहरीवीक्षणसंभावितविभावरीसमागमशङ्कानः वारं वारमुपक्रान्तसौरतरथाङ्गमिथुनपक्षयुगलविक्षेपविकीर्णार्णोजनितराजतपात्रपरिस्रस्तसमीकृतपटवाससञ्चयपरागपरम्परापङ्किलितपाथःपटीरपङ्काङ्कितकटकावलाशतसमुल्लासितं, पुरन्दरपुरीराजत्सुन्दरीवदनविभावरीकान्तविलोकनतरस्तोकेतरकौतुकचकोरनिकरकूजितानुरञ्जितकान्तोपान्तकान्तारं, रसालसालतमालप्रियालप्रमुखसालावलिकमनीयकिसलयनिकरनिगरणरमणीयकण्ठकळकण्ठवरश्रवणीयरवश्रवणोत्कण्ठकण्ठीरवकुलकण्ठोपकण्ठाकुण्ठविक्षिप्तशुण्डादण्डवनशुण्डालवरकरटयुगलनिरर्गलानिर्गलद्दाननीरवीचीनिचयगन्धचोरसदाचरसञ्चारदरविदलितमन्दारकुन्दमाकन्दसिन्दुवारकुमुदकोकनदकुरवकमरुवककेतकीप्रभृतिसुमप्रकरपरागसन्दोहकर्बुरितमकरन्दवृन्दनिष्यन्दसन्दोहावहसेवासमागतगुहाशयमहीशयमुद्भ्रान्तमहिळाशयपञ्जरालयविपञ्चिकावरहंसिकास्वनसमाकर्णननिरन्तरानिष्यन्दमानमन्देतरतटानिष्यन्दवृन्दनन्दनीयतरं, मन्देतरसिद्धिप्रदोऽयमिति उपान्तमुपसृतैः

रम्भादिमेनकान्तापरवारकान्ताधरपल्लवसमपल्लवोपभोगाभिलाषयां मञ्जुतरशिञ्जितव्याजान्मन्त्रमावर्तयद्भिरिव शारिकाशुकपोतकसङ्घातैरतिकान्तं, नितान्तसम्प्राप्तनिशान्ततया सुमनोरससञ्जिघृक्षया नितान्तं परिभ्रमद्भिर्मधुपैरभिप्रकटयन्तीमिव नात्र मधुपानावकाश इति, कृतव्रतयैव प्रतिदिवसं व्याकुर्वद्भिरिव परेभ्यो मञ्जुतरमालपद्भिरुल्लासितं परभृतैः, क्रियाकलापनिर्वर्तनकल्लेतरबालखिल्यप्रमुखकान्तारावसथैस्तापसयूथैरपि पर्वतशिखराग्रात् पतितव्यमेवमिति प्रदर्शयद्भिरिव शिखराग्रान्निष्पतद्भिर्निर्झरसङ्घैः समलङ्कृतं, शिलाकलापाद्युपलब्धेनापि स्निग्धतरविमलान्तर्हृदयेन करणीयैव सता सर्वदा परोपकृतिरुदकेनापीति प्रकाशयद्भिरिव पयोवितरणतत्परैः वापीकूपतटाकादिसरःप्रवरैरभिमण्डितं, शिखण्डिमण्डलतुण्डानिलपारणगुम्फितकुण्डलीन्द्रमण्डलसुखानिद्रादण्डजरकुलषण्डलेन्द्रपरिमण्डितं, अनुवादमध्यमगिरिराजाम्रेडितं मृडानीवल्लभभूमीभृतः, प्रतिसर्गं प्रालेयशैलस्य, द्विबिम्बं विन्ध्यस्य, द्विर्भावं प्रभाकरभूधरस्य, मूर्त्यन्तरं मन्दरस्य, वसुधातलसम्भूतमिव सुधान्धसां सुकृतसमाजं, मानसमदकारिणमपि मानसमदहारिणं, वासन्तिकपादपसमुदायमिव घनपुष्पोल्लसितं, शिल्पीक्ष्वमिव शैत्योल्लासितं, वर्णिवरमिव प्रशस्तमेखलं, निखिलजनमनोरञ्जनमभिवीक्ष्य समन्तादमनन्तानन्ताधरं तत्र च नितान्तं वीक्ष्य लसन्तं वसन्तमवगाहे चामोदसरस्वन्तम् ॥

एषोऽनन्तक्षितिमृदधिराड्राजयार्ये निनीषन्
वल्लीनादीन् द्विजनृपकरादीन् परेभ्यो विजानन् ।
आहूयैतान् सुरपथमहामण्डपे संविचार्य
प्रत्येकं यन्निदिववसतां पश्यतां नीतिमार्गम् ॥ ४४ ॥

आलोच्याद्यं सुहुतवहनेऽन्यानिदानीं नियोज्य
रन्ध्रे नूनं महति च भृशं राजतेऽन्यत्र दण्डे ।
इत्यस्माकं बहुतरमयं बन्धुवर्गाभिमाना-
दिन्दुः पूर्वं निजकुलगुरू रौहिणेयावतारे ॥ ४५ ॥

यत्क्षोणीधरतुङ्गशृङ्गविलसत्सालं समीक्ष्योन्नतं
देवः कश्चन पाकशासनपुरप्रोत्तुङ्गकेतूत्तमम् ।
गन्तुं निर्जरपत्तनं कृतमतिस्तल्लक्ष्मदर्शी जवा-
द्गत्वा स्वर्गमधश्च वीक्ष्य कुसुमं तत्राशशङ्के परम् ॥४६॥

वियत्करेणौ वियदापगाया-
मगाधतोयेष्ववगाहमाने ।
यन्ता समारुह्य यदद्रिकूटं
दूरीचकारातिनिपातशङ्काम् ॥ ४७ ॥

वियत्करेणुर्मदविह्वलाक्षो
यदद्रिकूटं वियदापगायाम् ।
विलोक्य तत्रत्यकरीरराशा-
वाशापरीतः खलु चुम्बति स्म ॥ ४८ ॥

यदद्रिकूटोपरि राजमाना
वापीः प्रसन्नोत्पलसारसास्ताः ।
उल्लासभाजां त्रिदशेश्वराणां
व्रातो वधूनामवगाहते स्म ॥ ४९ ॥

यदद्रिवापीविहरद्दिवौक-
स्सीमन्तिनीवक्त्रसरोरुहेषु ।
निशाम्य नेत्राणि जवेन नून-
मिन्दिन्दिराः स्वीयधिया भ्रमन्ते ॥ ५० ॥

यदद्रिकूटे कमलानिवास-
सेवाविशेषोल्लसता जवेन ।
मृगाङ्कबिम्बेन करोति काचित्
तन्नामगन्धान्मृगनाभिशोभाम् ॥ ५१ ॥

मृगनाभविशेषकं ललाटे
कमनीयं विधृतं तया तदानीम् ।
अपरा तु समीक्ष्य मार्गमाणा
मृगनाभिं न हि तादृशं त्ववाप ॥ ५२ ॥

यदद्रिरामाशिखराग्रकाले
मुक्ताललन्तीव विराजतीयम् ।
नक्षत्रपङ्क्तिर्नयनप्रमोद-
प्रदा सदामोदकरावबद्धा ॥ ५३ ॥

उत्तुङ्गयत्पर्वतशृङ्गराज-
त्तारावली तत्र सरोरुहाणाम् ।
पत्रस्थिताच्छाच्छपयःकणानां
रीतिं विशुद्धां विवरीकरोति ॥ ५४ ॥

मत्सूनुभग्ना अपि कीचकाः पुन-
र्यस्मिन् भणन्तीति कथं नु निर्भयाः।
आलोकितुं प्राप्त इव प्रभञ्जनो-
ऽनन्ताचले मन्दगतिर्विराजते ॥ ५५ ॥

यदद्रिशृङ्गोपरि तुङ्गसालान्
सालाः सुराणामवलोक्य नूनम् ।
तत्साम्यलाभाय नभोऽन्तराले
स्थित्वा सुमैर्विष्णुपदं यजन्ति ॥ ५६ ॥

यदद्रिसद्मामरसुन्दरीणां
मुखारविन्दस्य विलोकनेन ।
त्रपापरीतं सरसीरुहाणां
वृन्दं विलीनं समभूद्वनेषु ॥ ५७ ॥

यत्स्फाटिकोत्तुङ्गतटेषु दृष्ट्वा
निजां पुरीं निर्जरसः कदाचित् ।
त्वरातिरेकात् प्रविशन्त एव
प्रज्ञावतां हास्यपदान्यभूवन् ॥ ५८ ॥

यो भूधरः सद्भुरतानुबन्धा-
न्नूनं सुधादीधितिदर्शनेच्छुः ।
भूरुट्करै रम्यफलप्रसूना-
न्यादाय तद्वीथिषु तिष्ठतीव ॥ ५९ ॥

मत्वा यदुर्वीधरहेमकूटं
त्रिविक्रमस्वामिकिरीटकोटिम् ।
अकाण्ड आसीत् स कथं प्रगल्भा
अपि ध्रुवं भ्रभ्रमुरित्यजस्रम् ॥ ६० ॥

फणाधरवराचलः सुरवरेशवेश्मोल्लस-
त्सुवर्णमयगोपुरस्फुरदुदग्रशृङ्गश्रियम् ।
स एष शिखरैरलं प्रकटयन् भृशं राजते
प्रियापरवशो रसोल्लसिततुङ्गशृङ्गः सदा ॥ ६१ ॥

रमणीयतमां गुरूत्तमः
फणिराड्धरणीधरस्य ताम् ।
सहसाधिययावधित्यकां
स सहानुचरैः सदग्रणीः ॥ ६२ ॥

तदनु समन्तादुद्वीक्षितचक्षुःश्रवोऽम्यक्षक्षोणीधरः स गुरुपुङ्गवः स्वच्छतया स्वादुतया च भगवतस्तस्य शतपत्रवासिनीभर्तुरङ्कुरयन्तीमनुकम्पारसभरमङ्कां, शशाङ्कवद्विलसत्कमलां, मेघमालामिव कादम्बिनीं, ऊर्मिलामिव लक्ष्मणोपेतां, सरस्वदुपान्तभूमिमिव विलसत्प्लवां, वीणामिव प्रवालरमणीयां, उद्यानभूमिमिव भृङ्गवरशोभमानां, निष्पटकवन्मकरकच्छपालङ्कृतां, दिग्गजराजीमिव कुमुदपरिराजमानां, सन्ध्यामिव महाशङ्खकमनीयां, पद्मनाभनाभिमिव सारसोल्लसन्तीमासाद स्वामिपुष्करिणीम् ॥

तदानीं तु स गुरुपुङ्गवो गाहमानजनतापहारिणि वारिणि रमणीये स्वामिपुष्करिण्याः निर्वर्तितस्नानादिनियमकलापो लसदूर्ध्वपुण्ड्रभसिततुलसीनलिनाक्षमालिकः सञ्चितचम्पकपङ्केरुहप्रभृतिसुमनःकरः दर्वीकरवरगिरिवासव्रतिबहुवासरैर्विनयातिरेकभासुरैर्भूसुरैः सततमुपसृतपरिसरतया पुलस्त्यपुलहप्रभृतितापसव्रातसमेतप्रभाकरसमभिभावमधिवहन् अम्भोरुहवासिनीनिवाससदनाभिमुखो निरगमत् ॥

एवं निर्गतो गुरुरग्रत एव प्रत्यग्रमणिप्रत्युप्ततया प्रभाकरमण्डलमिव सेवकजनभावुकपङ्कजप्रकरविकासनस्य, वसन्तसमयमिव प्रणतलोकसुकृतव्रातचूतसमुल्लासस्य, शतधारमिव विश्वव्यामोहमहीधरभेदनस्य, सत्कविकाव्यमिव सुवर्णभासमानं, पङ्केरुहकर्णिकोपमानं विमानं कमपि विलोकयमानः चामीकरधरणीधरमिव कल्याणवितरणप्रवीणं, प्रभाकरमिव प्रबोधजलजातविकासापादकं, विद्युत्सन्दोहमिव घनप्रकाशावहं, वासन्तिकपादपसमुदायमिव सुमनोभिरामोदितं, पाणिनीयतन्त्रप्रवर्तकतपोधनसम्बाधमिव वररुचिरमणीयं, निध्यष्टकमिव शङ्खपद्मोल्लसितं नीलालङ्कृतं च, यशोदानन्दनमिव नन्दनीयनन्दकामितप्रदं, रत्नाकरमिव लसमानोर्मिकं, प्रावृट्कालिकनभःस्थलमिव राजदिनमणिवलयोल्लसितं, उद्यानवनतल्लजमिवाभिनवमालिकामणिधरमकुटोज्ज्वलं, वरदराजमिव काञ्चनकाञ्चीमाबिभ्राणं, आर्यावर्तप्रदेशमिव प्रचकासत्कुण्डलकवचोज्ज्वलकर्णाङ्गदेशसमुद्भासितं, पद्माकरमिव चक्रराजराजमानं, वनितामिवातनुसमीरलीलोपयोगिनीं, सपरोन्मुखमेघनादवाचमिव रक्षोभयविधायिनीं मुनिजनमानसमधुदन्तावळालानायमानां निखिलजगदामोदकीं कौमोदकीमाबिभ्राणं, देशजातोल्लसिताख्यातिशोभितयापि न देशजातोल्लसिताख्यातिशोभितया, अङ्गदविलसितयाप्यनङ्गदविलसितया कैलासलक्ष्म्येव अळकान्तोल्लसमानया, मत्तमातङ्गवदानवारिमनोहरया, रामधनुर्वल्लयेव रक्षोपायविधायिन्या श्रुत्यन्ताकृष्टगुणविशेषया च, भूसुतयेव जनकामितसम्पत्प्रदया, वासुदेवलीलयेव नरकच्छेदिकया, प्रावृट्श्रियेव विलसद्धारपयोधरभासमानया, अभिनवप्रभासा रङ्गराजपरितोषप्रदया, कामधेन्वेव श्रीवत्सार्णवासरसिकया, त्रिदशेश्वरसम्पदेव विष्णुपदाश्रितया, प्रियतमया

रमया संशोभितवक्षस्तटं, जाजीराजीवपारिजातजातीतुलसीमालती-कुटजमञ्जरीपुञ्जपरिनिष्यन्दमानमाध्वीकपानपरमादरपरिपतितदीधिति-परीवाहसन्दोहसन्देहापोहकझङ्कारारवनिगममधुकरव्रातरमणीयतनुं, सेवकजनकामितं वितरीतुकामो विचेतुमिव निचयं तेषां काननौकसामधिसमीरणचरणाग्रणीधरणीधरशिखरमतितरां समिन्धमानम्, अरुणसारसराजमानकरुणारसपरिपूर्णारुणनयनं, स्वकृपापगापारकल्लोललवलेशप्रशमितापरिमितदुरितजनजातदत्तपरमाद्भुतभूतिमपारनिजभूतिं, सुरसार्थपोषकमपि नरसार्थपोषकं, तमोदानहरणसमर्थमपि नतमोदावहरणसमर्थं, राघवारीशशमनक्षमलीलमपि नराघवारीशशमनक्षमलीलं, वारिजातासनकलितोल्लासविलासिनमपि नवारिजातासनकलितोल्लासविलासिनं, वनितापापहारिणमपि अवनितापापहारिणं, अधिगतपरमानन्दमपि अनधिगतपरमानन्दं, तारकान्तलसमानाननमपि नतारकान्तलसमानाननं, वसुदेवसेवितमपि सेवितवसुदेवं, आमोदितसुमनःपुञ्जमपि सुमनःपुञ्जामोदितं, रञ्जितकान्तारावासजनविलासमपि भञ्जितकान्तारावासजनविलासं श्रीनिवासं विलोकयामास ॥

देशिकः स समभिवन्द्य पुनः पुनस्तमिन्दिरारमणं समर्प्य च तस्मै विविधोपहारं कुसुमादिहारं सङ्गृह्य सादरं शिरसा तत्प्रसादं तदनु समस्तावीदेवं देवम्—

अभिनवघनभासं चम्पकाभिख्यनासं
स्मितरुचिसमहासं सज्जनस्वान्तवासम् ।
वृषशिखरिनिवासं वेदविद्भिर्विशासं
विहितबहुविलासं तं भजे श्रीनिवासम् ॥ ६३ ॥

दनुजकुलकुठारं सन्धृतानेकहारं
निजरुचिजितमारं गोपिकायूथजारम् ।
उरसि विधृतदारं संहृतेलातिभारं
भवधरशतधारं साब्धिकन्याविहारम् ॥ ६४ ॥

तदानीम्, इत्थमभिष्टूयमानस्तदीयतपश्चर्यापरितुष्टमानसो भगवानम्भोरुहवासिनीनिवासः समवादीदेवं प्रददामीति सकलेप्सितं ते । तदनु गुरुरपि सादरमभाणीदेवम्—

यदि रासि मदीप्सितं रमेश
शरणं प्रणुवे सतां गतिं त्वाम् ।
प्रददातु रतिं त्वचञ्चलां त्व-
च्चरणाब्जसुधारसस्य पाने ॥ ६५ ॥

तदवकर्ण्य फणीशगिरीश्वरः
पुनरुवाच गुरुं निरपेक्षकम् ।
तव सदास्ति मदीयकथारति-
स्तदितरं वृणु मत् परमं वरम् ॥ ६६ ॥

इति समभिहितं महाभागवतं भगवता दत्तवता आर्यवर्यैप्सितं पूर्वमेव करुणार्णवेन नारायणेन वरानपि समानवरान् मन्वानः पुनरपि परमपुरुषपादपङ्कजपरिचर्याविरहकातरतालेन पुनरनभिप्रेतं तं गुरुवरमनु-गृह्य परमाशीर्भिः, असहमानं निजनिरोधानं समालिङ्ग्य च स्मृतः स्मृतः पुनःपुनरागास्यामीति पोषयित्वा च तं नानाविजगाथागाथा-राभिरभिनवरमणीयाभिरभिययौ निजभवनम् ॥

तदन्वनन्तराण्यामपि समवाप्य वेङ्कटेशापारकृपां स्वप्नानुभूतमिव पन्नगेन्द्रधराधरराजशाननारायणसम्पूजननमस्करणसम्भाषणादिकं स-म्भावयमानो भगवतोऽपारवैभवात् समाराध्य तं भगवन्तं नितान्त-मम्भोजवासिनीनिशान्तं सम्प्रणम्य पुनः पुनः घटिकाचलालयानिला-त्मजं तं, ततश्च नरके सरिचरणनालिनाब्जोकनलमनानवाननः तदितः परममहाभागवतैः सहितां काञ्चनगृहमञ्चयैः काञ्चीं नाम काञ्चन कमनीयां नगरीमानञ्चायमाचार्यः माचार्यः ॥

या च सेवासमायातपाकाहितानीरपाग्जिनवभूमिनमसजाप्रसू-नमरमकरन्दास्वादनसतंभ्रमसम्पतद्बम्भरकुलनङ्कारवरसङ्कारादि नूतने-तरभाषितस्तवदत्तादरश्रुतिश्रुतिचक्षुर्जनानिबिडनरपारिसरेण बालारुण-मणिमालालसिततनुलीलाविराजितरिपुजालार्थिजनपरिपालाम्बुमदना-लासमरुचिपशुपालबालाजनवरोल्लासनाभिशालसमनोपिलासेन सीमार-हितमहिमासहितराकाहितशङ्करपाकाहितमदमायाहितप्रमुखलेखाग्रणीविहि-

तानवद्यस्तुतिपरिगृहीतमहितामितगुणगणपरिवीतमानसरिपुभीततापस-परिगीतसङ्कटपरिपाटनक्रमपटुतरचटुलचरितभुवनविदितनिजमङ्गलदेवताप्रियतमभावेन तोत्राहतगोत्राहितपत्रामितगतिजैत्रातुलरययात्राविशेषचित्रांशुमित्रातिरयगर्वसर्वस्वनिर्वापणधुरीणसाधारणेतरवरणीयगतिधोरणीसमेतत्रिनतासुतारूढवनितायुतानेकद्विजातानीतफलजातास्वादनसञ्जातामितमोदेन वरदेन परिपालिता समृद्धतरसर्वार्था दरीदृश्यते नितान्तमद्यापि ॥

यां च राकाशशिकान्ताननिर्जरलोकाखिलशोकापोहकसेवकजनामितदायकाचरितनायकाधिकमोदकाद्भुतकामरसाश्रयमानसारुणसारसाङ्घ्रियुगलसामगानपरसाधुसङ्घपरिसाधिताधिकतरभावुकया वीक्षणमात्रक्षपिताखिलरक्षोगणलोकत्रयरक्षाविधिदक्षाद्भुतचरितयक्षाधिपीकृतनिजपक्षाश्रितजनपाथोरुहाक्ष्या कामाक्ष्या सहितः स हि मानी महनीयमहिमा हिमानीधरतनयाकामुकः सेवकजनकामितवितरणगीर्वाणतरुरभिवसति ॥

> सन्दृश्य तां तु वरदस्य पुरीमुदार-
> मेधाविलासजितगीष्पतिरार्य एषः ।
> वेगापगाविरचितोचितकाल्यकर्मा
> सेवार्थमाप सदनं वरदस्य तस्य ॥ ६७ ॥

> संसेव्य भक्त्या भगवन्तमार्य-
> स्ततः समुद्वीक्ष्य मनोभवाक्षीम् ।
> गोपालकृष्णाख्यगुरुं महान्तं
> संसेवितुं तस्य निशान्तमाप्नोत् ॥ ६८ ॥

तदनन्तरं गुरुरेषोऽनुदिनमनतिक्रान्तनिजदिनचर्यं सज्जनवर्यं निगमान्तसारसारार्थबोधननिरतं श्रीमन्नारायणचरणारविन्दगाथासुधारसपानाभिरतं श्रीरामचन्द्रमन्त्रयन्त्रतन्त्रार्थव्याख्यातारं आश्रितजनत्रातारं सेवकजनकामितवितरणगीर्वाणतरुं धरणीगीर्वाणगुरुं तं गोपालकृष्णं तुलसीकुसुमानयनारोपणासेचनादिमशुश्रूषाभिः शुश्रूषमाणस्तत्रोवास कतिचित्कालम् । तदानीमभ्याजगाम च निदाघसमयः ॥

शुक्रागमे सुमनसां भृशमाविरासी-
दुल्लासहानिरिति साम्प्रतमेव यस्मात् ।
तस्मिन्नवाप समये तु पलाशसङ्घः
खेदं नितान्तमिति यत्तदिदं विचित्रम् ॥ ६९ ॥

विन्ध्याथ लब्धावसरः प्रभाकरः
स्वैरं स शुच्याश्रयगर्वितः करैः ।
अस्मत्कुलीनप्रमदापहारिणो
नूनं पलाशा इति सेर्ष्यमघ्न तान् ॥ ७० ॥

अह्नामधीशः खररश्मिसञ्चयै-
रह्नाय धात्रीजनितान् विधुप्रियान् ।
सम्पीडयामास स लोकबान्धव-
श्चित्रं धरित्र्यामिति यद्विजृम्भते ॥ ७१ ॥

पादपान् करसहस्रपीडितान्
नात्यजन् द्विजवरा इति ध्रुवम् ।
पूर्वमस्मदुपकारिणो ह्यमी
सूचयन्त इव तां कृतज्ञताम् ॥ ७२ ॥

पत्रदानमपि नाचरन्ति ये
तानमी द्विजवराः समत्यजन् ।
दानतत्परजनस्य सेवनं
ह्याचरन्ति धरणीतले जनाः ॥ ७३ ॥

विजहौ विधुरपि जाड्यं
हिमकिरणोऽयं जडाशयोद्भूतः ।
तदिदं प्रथितं भुवने
यच्छुचिसङ्गो हरेज्जाड्यम् ॥ ७४ ॥

तदानीं तु —

प्रोद्यद्विष्णुः शितिगलकुलाह्लादसङ्घातदायी
मेघश्यामो मदलजनकश्चञ्चलाश्रीनिवासी ।
सम्प्राप्तोऽयं घनरससमयः शक्रकोपप्रदायी
दातुं नूनं चिरतरतपःस्थास्नुभिः प्रार्थितार्थम् ॥ ७५ ॥

अतनुतापविदारणकारणे
रसमये समये समुपेयुषि ।
अपि मलीमसतामनवस्थितिं
समधिगच्छति कृष्णघनोऽद्भुतम् ॥ ७६ ॥

प्रतिक्षणं प्रस्फुरति प्रमोदात्
स्मरेऽपि तस्मिन् समये नितान्तम् ।
प्रोज्जृम्भते शम्बरवृद्धिरासी-
देतद्विचित्रं भुवनत्रयेषु ॥ ७७ ॥

रसारुहाणां रसकामुकानां
तदाविरासीदमृतं नितान्तम् ।
उपस्थिते कृष्णमहाघनौघे
तपःस्थितानां किमलभ्यमस्ति ॥ ७८ ॥

रमानिवासा अपि पद्मसङ्घा
विषातिरेकेण विषादमापुः ।
स्थिरात्मनामुल्बणसङ्क्रमेन
हानिर्भवेदित्यपि दर्शयन्तः ॥ ७९ ॥

तदानीमेवं विलसति वर्षासमये कश्चन चतुरः शिष्यवरीणः सम्पाद्य चाभ्यनुज्ञामस्मदार्यस्य सामोदं समवर्णयदेवं चित्रतरम् ॥

व्रातो मरुतां समीक्ष्य शुक्रान्ते-
वास्यभ्युदयादतीव तप्तः ।
वीतां सुमनस्ततिं विहायः-
पाथोधिं विममन्थ सोऽमृतेप्सुः ॥ ८० ॥

विमथ्यमानात्तरसा मरुद्भि-
नभःपयोधेर्घनमन्दरेण ।
तदा समुद्भूतमहाविषौघै-
स्तृप्तिं भजन्ते शिखिकण्ठसङ्घाः ॥ ८१ ॥

निर्मथ्यमाने नितरां नभोम्बुधौ
सा कामधेनुः समभून्मनोहरा ।
इष्टार्थसिद्ध्या परितोषयन्ति यां
रामासमेतास्तरुणास्तपोधनाः ॥ ८२ ॥

संसारेषु न चान्यदस्ति नितरां सम्प्रार्थनीयं यतः
यं सम्प्राप्य महत्तरं पितृऋणं दूरीकरोति क्षणात् ।
लाभे यस्य महीयते क्रतुभुजां लोके नितान्तं सुधीः
सोऽयं विष्णुपदाश्रयः समभवत्सन्तानभूमीरुहः ॥ ८३ ॥

विमलाप्सरसां सङ्घास्तदानीं प्रमदावहाः ।
रसातिरेकाद्विलसन्मञ्जुघोषोपशोभिताः ॥ ८४ ॥

तदाभवद्दिव्यतमामृतानां
निषेवणात्संविजहत्सु तापम् ।
मरुत्कदम्बेषु विचित्रमेत-
द्यच्छक्रकोपः समभून्नितान्तम् ॥ ८५ ॥

अधितटनिकटं विपाटयन्ती
विटपिवरांस्तटिनीं प्रदर्शयन्ती ।
इति जडगतयो निजाश्रितानाा-
मपि विरराज विरोधमाचरेयुः ॥ ८६ ॥

आश्रुत्य चेत्थमत्यर्थं कान्ततममुत्प्रेक्षितमन्तेवासिना निजोपान्त-वासिना वीक्ष्य स तस्योपान्ते विलसन्तं नारदादिमुनिवृन्दमिव इन्दिरासदनसमानं दिनं, जयद्रथजन्यमिव प्रशस्ततमसुमनोव्रातरञ्जिताऽर्जुन-कीर्तिहरं, पयःपारावारमिव परिशुद्धतमामृतवितरणजागरूकं, गान्धारराजतनूजमिव धार्तराष्ट्राह्लादकरं, वैनतेयमिव विषधरनिर्यापणकारणं, मेदिनीशसभान्तरमिवानुभूतबलाकाकुलकोलाहलं, तपोधननिकुरुम्बमिव समुल्लासितमहत्तमजात्या, श्रीरामचन्द्रमिवागस्त्यामोदविधायिनं, केदा-

रक्षेत्रमिव स्वयमासन्नतमहिमागमं शरदागममुद्वीक्ष्य नितान्तमानन्द-रससान्द्रीकृतमानसो बभूव ॥

तथा खलु गुणाम्बुधेर्गुरुवरस्य वीक्षाटवी-
विहारिहरिसेवने धृतविलासमासीन्मनः ।
सनातनसरस्वतीमणिकिरीटपारम्परी-
विचारणकृते चिरं निवसतः सदेशे गुरोः ॥ ८७ ॥

निर्गम्य काञ्च्या निजदेशिकानां
निदेशमासाद्य सदासवर्गः ।
तदा समागादुगुरुसार्वभौमो
वीक्षावनं राघववीक्षणार्थम् ॥ ८८ ॥

वीरराघवविलोकनोल्लसन्-
न्मानसः समगमत्स मे गुरुः ।
प्राक्तनोक्तिमयपोत्रिसन्निधिं
पार्थसूतमवलोक्य सादरम् ॥ ८९ ॥

तत्र वीक्ष्य कमलासखं किटिं
प्रत्नसूक्तितनुकोटिसम्भवम् ।
देशिकः समभिवन्द्य सादरं
सैष कानि च दिनान्यनन्दयत् ॥ ९० ॥

प्राचीनसूक्तिमयपोत्रिवरस्य वाणी-
माकर्ण्य देशिकवरः सहसादरेण ।
आसाद्य भूपपशुपालपुरं पुराणं
संसेव्य नन्दतनयं मुदमाससाद ॥ ९१ ॥

स रङ्गपुरवासिनं जलधिकन्यकाकामुकं
समैहत विलोकितुं सकलवावदूकाग्रणीः ।
सनातनसरस्वतीशिखरसूरिरस्मद्गुरुः
समासददिमां पुरीं तदनु दासवर्गैः समम् ॥ ९२ ॥

इति श्रीसीतारामसूरिविरचिते कविमनोरञ्जके तृतीयोल्लासः ॥

दिने दिने पल्लवतोरणावली-
प्रसादनैकोत्सुकतारकाभिकम् ।
विरिञ्चशुद्धान्तवधूविपञ्चिका-
निनादविश्राणितकर्णकौतुकम् ॥ ४ ॥

राजीवजाजीमुखपुष्पमालिका-
निर्माणसाकाङ्क्षवसन्तसंयुतम् ।
सेवासमायातसुपर्वपुङ्गव-
प्रोद्भासिदन्तीन्द्रमदौघपङ्किलम् ॥ ५ ॥

विनीतपाकाहितपक्ष्मलेक्षणा-
प्रसार्यमाणागरुधूपवासितम् ।
समासदद्रङ्गधुरीणसन्निधिं
सदासवर्गः स मम्रैष देशिकः ॥ ६ ॥

करुणावरुणालयस्तदा
गुरुणा परिणूतसद्गुणः ।
शरणागतरक्षणक्षमो
ददृशे करुणार्णवेन सः ॥ ७ ॥

वरुणालयजातसुन्दरी-
रमणं नयनारुणाम्बुजम् ।
शरणं प्रणनाम देशिको
जगतां स हि रङ्गनायकम् ॥ ८ ॥

तदनु देशिकोऽयं वाताशनेशशय्याधिशायिनं कल्याणगुणगण-सर्वातिशायिनमगणितनिजमणिगणकिरणविद्रावितानिबिडतरातिमिरफणीन्द्रफणाततिसम्पादितासितातपत्रशोभं अम्भःप्रदसप्रभं भगवन्तं रङ्गनायकमभिष्टूय विविधैः स्तवैः शिष्टवर्गतुष्टिप्रदैरिष्टवर्गसहितः, तत्सेवाव्यपनीतबहुवासरः समधिगत्य सत्तमसमाधिष्ठितं गोष्ठीपुरं निजजनमानसमानसनिवासनिवासायमानपदसारसं सरीसृपपतिपर्यङ्क-शयनं सारसनयनं सम्प्रणम्य सौम्यनारायणं संस्तूय सुतरां समगाद-गवरमृषभाद्रिम् ॥

तदनु सैष गुरुर्गुणवारिधि-
स्तमधिरुह्य धराधरमद्भुतम् ।
समवगाह्य च नूपुरपूर्विकां
सुरनदीमकरोन्निजनैष्ठिकम् ॥ ९ ॥

इन्दिरारमणमन्दिरमेष
द्यायया मदनसुन्दरमूर्तिः ।
सेवितुं स किल सुन्दरराजं
राजमाननिजलोकविनोदम् ॥ १० ॥

तदनु सुन्दरराजविलोकनो-
ल्लसितमानस एष महार्यः ।
समभिवन्द्य स तं भगवन्तं
बहुतरं प्रशशंस च भक्त्या ॥ ११ ॥

समधिगत्य ततः स पुरीं मधुरां मधुराधिपसिसेविषया सेवकजननिरन्तरप्रमोददायिनं मन्देतरसौन्दर्यशालिनं निखिलभुवनराजं सुन्दरराजं तं भगवन्तमभिवन्द्य भार्गवीरमणं निटिललोचनदावानलज्वालायितचटुललीलावलोकनतूलायमानमदनं कृतनिजजननिखिलरिपुमदनं निजतनयसितांशुसमुपलालनकौतूहलादिव समागतसुरसरित्समुद्भासमानमौलिं शशाङ्कमौलिं बृन्दारकसन्दोहसंवन्द्यमानवन्दारुबृन्दवाञ्छितप्रदानमन्दारपादपायितपादारविन्दममन्दपरमानन्दं तं सुरेश्वरं वीक्षणमात्रनिर्वर्तितभुवनत्रयरक्षां शिक्षितसुम्भनिसुम्भप्रभृतिदानवाध्यक्षान्निजजनपरिरक्षणबद्धदीक्षां समीक्ष्य च मीनाक्षीमाजगाम नवग्रहग्रावसागरम् ॥

तदा तु किल —

त्वदीयवाचानिचयप्रचारं
समीक्ष्य नूनं त्रपयाम्बुराशिः ।
तिरोहितं वीचिचयं चकार
प्रकाशयन् सज्जनरीतिमेषः ॥ १२ ॥

अथ खलु समवगाह्य तत्र विचित्रतरे पारावारेऽभिवीक्ष्येक्ष्वाकुकुलक्षीरोदधिरङ्कुलक्ष्मलक्ष्मणाग्रजविनिर्मितक्षारोदधिसंलक्ष्यमाणसेतुं तद्दर्शनानन्दितमानस एवमाचचक्षे —

वन्दे सेतुं सेवकाशेषदोषान्
  निःशेषं तं नाशयन्तं महान्तम् ।
सीतामाप्तुं निर्मितं राघवेण
  प्राप्तुं कीर्तिं शिक्षितुं राक्षसांश्च ॥ १३ ॥

पुनः सविनोदम्—

रघुवंशभवा धराधिनाथाः
  स्वपदाक्रम्य विपक्षभूभृतस्तान् ।
विलसन्ति महानयं स सेतु-
  र्बत संराजति सूचयन्निवेति ॥ १४ ॥

पुनः सविमर्शम्—

पदा क्रमितुमक्रमः किमिति सोऽब्धिकन्याप्रियः
  निजश्वशुरसागरं समकरोत्ससेतुं तदा ।
निजान्वयजनोत्तमैरिति कृतः समुद्रो ह्ययं
  समुद्रयितुमुत्सुकः किमिह सेतुमुद्रां व्यधात् ॥ १५ ॥

अनन्तरमनन्तरविसप्रभो निगमान्तगुरुकुञ्जरः रञ्जितनिखिललोकः सञ्जितसकलवादिजनो भञ्जितकुसुमेषुप्रपञ्चको वञ्चितकामाद्यमित्रषट्कः सञ्चितपञ्चजनपञ्चाननपादारविन्दपरमाद्भुतभक्तिरस्मदार्यवर्यः समाजगाम काण्डासनकोटिम् ॥

तत्र हि —

ननर्त रत्नाकर उद्धृतोर्मि-
  प्रबाहुरारादिव वीक्ष्य हृष्टः ।
गुरुं भवाम्भ्यद्य विमुक्तदोषो
  गुणाम्बुधेः स्पर्शनतोऽधुनेति ॥ १६ ॥

कल्लोलकोलाहलकैतवादयं
संराजते पातकिनोऽपि वारिधिः ।
रक्षाम्यहं स्नातृजनान्वदन्निति
श्रीरामगाथाश्च पठन्निहानिशम् ॥ १७ ॥

स खल्वायोधनधरणीतलमिव नृत्यत्कबन्धं वसुमतीपालयितारमिव वाहिनीशतनेतारमवगाह्य मुहुर्मुहुरम्भोनिधिमकरोत् सप्तदिनसप्ततन्तुम् ॥

प्रस्थाय बाणासनकोटितो गुरु-
र्भक्तेष्टविश्राणनबद्धकङ्कणम् ।
श्रीरामनाथं समगात् सिसेविषु-
स्तन्मन्दिरं तीर्थवरैर्विराजितम् ॥ १८ ॥

समभिषिच्य गुरुर्गुणवारिधिः
सुरनदीसलिलेन सदाशिवम् ।
प्रकटितार्थसुधाज्ञानदीर्घिका-
धरवराभिधमेनमथाकरोत् ॥ १९ ॥

तदनु देशिकोऽयं प्रस्थाय ततः तीर्थनायकस्थलात् नृपवरपुरमिव सदारामोल्लसमानं गण्डकीसिन्धुवत् सचक्रतीर्थं तारकागणमिव कलानिधिकान्तं प्रकटितस्ववाच्यार्थैः चन्द्रशालासार्थैः समुद्भासमानैर्द्विजवरभवनैः परिराजमानमधिगत्य पट्टणं कुशशयनाभिधानं सम्प्रणम्य रघुनाथं निजनाथमस्तावीत् ॥

लोष्टीकृतनिष्टप्ता-
ष्टापद एषोऽस्मदाचार्यः ।
जातस्ताम्रासेवा-
चिरकाङ्क्षी चित्रमेतद्धि ॥ २० ॥

तदन्वधिगत्य ताम्रातटिनीं तटिनीशसङ्गममिव मुक्ताफलाश्रयतानुबन्धत इत्थमकथयत् ॥

करणीकरवाणि मे शिरः
प्रणतौ हि तरङ्गिणीपतेः ।
रमणीरमणीयवारिणां
शरणीकृततीरसाधुनाम् ॥ २१ ॥

इत्थमुदन्वन्तमवादीच्च —

जडाशयोऽप्येष तरङ्गिणीपतिः
सुतां सुतं च प्रददौ महात्मने ।
सरोजनाभाय मृडाय नो मतिः
प्रशस्यते दैवबलं बुधैस्ततः ॥ २२ ॥

सविनोदम् —

स्रोतस्विनीकमन एष जडाशयोऽपि
रत्नानि शङ्खनिचयानि च मौक्तिकानि ।
आस्ते पिधाय कृपणां निजवृत्तिमेव
सन्दर्शयन् लवणजीवन इत्यहोऽहम् ॥ २३ ॥

पुनः सकुतूहलम् —

गम्भीरोऽप्यम्बुनिधिः
प्रवृद्धसत्त्वो दिने दिने सोऽयम् ।
समभून्मलयौरस्यां
संसक्तात्मा स्थिरं शीलम् ॥ २४ ॥

मलयजासरिदीशसमागमे
तदनु सैष निमज्य मुहुर्मुहुः ।
सुमतिभिः समवाप्तसमेप्सितः
समगमत् स हि तां कुरुकापुरीम् ॥ २५ ॥

तत्र स मुहुर्मुहुरवगाह्य जलजाततीर्थे निगममौलिसारस्वरसमुल्ला-स्यमानस्वान्तसरोजः अनुगतसज्जनजातः परिपूज्य तं आनकजानिं जलजातादिभिः सुमजातैः सुजनसन्दर्शनसञ्जातमन्देतरप्रमोदं, कल-

श्रीसुतमिव कृपोपेतं, सुग्रीवमिव साङ्गदं इळावृतखण्डमिव वररत्नकटकोज्ज्वलं, यादवसमुदायमिव गदोल्लासितं, यदुमिव दरवरकरराजमानं, रविमिव रथाङ्गनन्दककरं, गोधनमिव श्रीवत्ससंशोभमानं, प्रावृडभ्रमिव नीलाभ्रभासमानं, वाजिराजमिव ग्रीवाराजितदेवमणिं, सांयन्तनसमयमिव पीताम्बरं, मानससर इव शिञ्जद्धाटकहंसकं, मत्तमातङ्गमिव पराङ्कुशपरिष्कृतं सम्प्रणम्य तमादिनाथं निजविरचितदिव्यप्रबन्धराद्धान्तवद्धशुद्धान्तःकरणैर्धरणीगीर्वाणगणैः पुनः पुनरनुवर्ण्यमानगाथाशतं तं शठकोपमुनीन्द्रं सम्प्रणम्य च सानन्दमवादीदेवम् —

चिञ्चातरुतलनिलयं
कलये चेतसि पराङ्कुशाख्यं तम् ।
यत्सूक्तश्रुतिजलजे
बुधभृङ्गा अनुदिनं रमन्ते हि ॥ २६ ॥

तदनु देशिकोऽयं चिरन्तनसूक्त्यन्तमकरन्दसमास्वादनमिळिन्दायमानमानसः सानुगः समासेवमानो मळयानिलसोदरीकूलयुगळसमुल्लसमानकमलाकमननिलयान् स्वसमागमसकुतूहलसकलपौरलोककोलाहलैः निषादिविषादितमत्तदन्तावळफीत्कारैः प्रगृहीतप्रग्रहहयहीङ्कारैः परितः प्रहण्यमानमङ्गलभेरीतूर्यानकपटहपणवघणघणायमानघनततानद्धसमुद्भूतध्वनिमिश्रकोलाहलिते निखिलहरिदन्तराळे ससम्पूर्णकुम्भमेव समासेवनीयः सम्पूर्णसर्वार्थोऽस्मद्गुरुरेष इति करसन्धृतदुग्धपूर्णस्वर्णकुम्भैः अभ्यागतोऽयं किमेतत्पत्तनोपान्तमितिदिदृक्षयेव समधिरूढवरीणत्ररणतोरणैः पट्टणधरणीविबुधगणैरिव सालभञ्जिकापुञ्जैः समुल्लासमानां, प्रासादप्रकरपुञ्जीभवदब्जोपलसालभञ्जिकानिकरायमाणनिर्जराधिराजराजिभिरधिराजमानां, प्रतिक्षणं विस्फुरत्स्फटिकभित्तिगभस्तिधारामालाळीकात् दलितकुवलयदलवलदमननीलमणिसौधदीधितिव्रातैर्ललसितशिलीमुखकलितलेखेश्वरालयविजयजायमानार्जुनयशोराशिनेव समुल्लसन्तीं प्रतिसद्मप्रासादप्रबध्यमाननवरत्नतोरणगणमयूखरेखां लेखेशनगरनगरासमधिमन्य नानटङ्किरा-

राममयूरकुडुम्बकदम्बकैरभ्युल्लसन्तीं, सुधाधवळमन्दराचलकूटकूटाय-मानचन्द्रशालावलिसमुल्लसितां, करतलकलितपद्मरागगारुत्मतविद्रुमवज्रवज्रिनीलमयूखकोरकावलिमत्तया करयुगलनिरर्गलनिर्गळन्नळिनोत्पलविमलहसन्तीजातीपारिजातजाजीप्रमुखसुमसमुदायसमारूढशिरोगृहविप्रगृहिणीभिरिव प्रासादाग्रप्रकलितकल्याणसालभञ्जिकाभिरभ्युल्लसद्भिः भवनवरैः परिशोभमानामुपचारितः पुरतः पुरतः समायातसज्जनैः सह सम्पूर्णकुम्भं समगत्य पुरीं पयःप्रदराभिधानां तत्र तत्र च परिपृष्टः सादरमुदारः सूरिजनैर्भावुकमतितरामानीतत्रिदशसरित्सलिलः मङ्गलेश्वरकरुणालोकनकलशकलितकौतुकाभिषेकः सम्परिक्रम्य तं मङ्गलेशं पचेळिमपूगपुन्नागनागकेसरसारसरसालपल्लववितानसमुद्भासितं द्विजगणपरिपठ्यमानमङ्गलपुराणवाणीरणितमुखरितदिगन्तराळमाससाद सदनं पित्रोः पदसारससेवनलालसः ।

> ननाम पितरावयं प्रणतलोकसम्प्रार्थित-
> प्रदानविलसन्मतिर्विमतपद्मिनीचन्द्रमाः ।
> अनन्तगुणसिन्धुना समभवत्सुराजन्वती
> स येन धरणीभवापतिपदाब्जभक्तिक्षितिः ॥ २७ ॥

तदनु देशिकोऽयं सुचिरसमागतस्वसन्दर्शनसमुदितप्रमोदमेदुरदेहां करुणामकरन्दानन्दमानसारविन्दामाभियातं कथमेतावता भवता, वर्तितं च वृत्त्या कयेति पृष्टवतीं शिष्टमतिं तां निजजननीं प्रमोदोदन्वदुदरनिमग्नमानसः समभिदधावेवं गाथास्तास्ताः पुरा निजानुभूताः ॥

> प्रादक्षिण्येन क्ष्मां
> क्रमशो हि समस्ततीर्थानि ।
> गाहं गाहं समगां
> स्मारं स्मारं पदाम्बुजं युवयोः ॥ २८ ॥

तदा खलु कदाचित् समधिगतवति सनातनसरस्वतीतन्वतनुभानुतापतान्ते नितान्तं विन्ध्यानन्ताधरवरकटकोपान्तं पञ्चाननचापभञ्जकरामभद्राश्वतिनिर्वर्तनाय सञ्चिन्तयति मयि यदृच्छातः सम-

धिगतः कोऽपि धरणीगीर्वाणः अत्र खलु भगवन्, तापसस्वामिन् जानकीजानिचरणनीरजराजमानगाथामधुपानधौरेयमानसाळिमञ्जुळतरानन्तवाचा वाचालद्विजगणपरिपठ्यमानालयलपितमौलिसारसुखरितहरितान्तरे मन्दानिललोलायमानकमलालयकेलिलोलमराळावलयदृष्टचरप्रसूनसुमोत्पच्चयभिव्यञ्जकसरोजिनीराजमाने पौराणिकवाणीगणगुणनकुशलशारिकाशुकपोतककमनीयकूजितश्रुतिशमितश्रान्त्यरात्यध्वनीनजनजातरञ्जितकान्तोपान्तकान्तारे कल्पानोकहाविशङ्कटप्रकाण्डविटपायमानविटपाग्रकूटकूटनिकटप्रकल्पिततपोधनोटजाकल्पे अल्पेतरपल्लवपम्फुल्लमानप्रसवतुलसिकावनराजिराजमानोपवने दक्षिणतोऽत्रितपोधनराजोटजात् तमकाण्डजानकीकुण्डमण्डिते नृपनिकेतने इव नानावितानसमुद्भासिते विन्ध्यभूधरकटककानने निवसतु भवान् निर्वर्तयितुमाराधनं माधवस्येति समभ्यभाणीत् ॥

इदं श्रुत्वा गत्वा जननि तदहं काननवरं
रमानाथं नाथं निखिलजगतां तं रघुपतिम्।
यजन् मोदात्किञ्चिद्दिवसगणमत्र व्यपनयन्
समागान्मातस्ते चरणयुगसन्तानकृपया ॥ २९ ॥

अभिधाय चेत्थमभितुष्टमानसोऽस्मद्गुरुवर्यः यदुरघुवर्योदारलीलामनुदिनमाश्रावयमाणो जननीं जनकं च जाजीराजीत्रपारिजातजातीचम्पककुमुदकुन्दमन्दारवकुलतुलसीमालतीसुमनःसमाजैः परिपूजयंश्च सोपचारं जानकीजानिं क्षितिभृदध्यक्षेक्ष्वाकुसन्तानसागरसारङ्गलक्ष्मलक्ष्मणाग्रजन्मानं तत्समर्पितभैक्षमात्रनिर्वर्तितवर्ष्मरक्षणः उवास तत्र कतिचिच्छरदः पित्रोः परितोषाय ॥

तदानीं त्वनुदिनमविच्छिन्ननिजजननीपदपङ्कजपरिपूजनः पौरुषेयेतरभाषितशीर्षामृतसमास्वादनलसमानमानसः देशिकोऽस्माकं निर्वर्त्य शुश्रूषामशेषां निजतातजनन्योः नाभाग इव परित्यक्तभागः दूरीकृतविषयोपभोगः ऊरीकृतशरीरमात्रपरिग्रहः महीमिमां विचचार निर्विचारमेवम् ॥

पयःप्रणालीपुरतोऽनुगाम्यैः
सहाभिमुख्येन स ताम्रपर्णीम् ।
पुरं ययौ वेणुवनाधिराजो
वगाहमानः किल तत्र तत्र ॥ ३० ॥

तत्र खलु —

स्वदासलोकाय मुदःप्रदं सदा
फणीन्द्रपर्यङ्कवराधिशायिनम् ।
सरोजनाभं जगतामधीश्वरं
ननाम तं चापि सदाशिवं गुरुः ॥ ३१ ॥

तदनु देशिकोऽयं प्रस्थाय ततः शालिवाटिकास्थलादनिलाब्व-नपालकाचलकूटकलितवासं संसेव्य श्रीनिवासं स्वजनवचनश्रवणस-न्धृतकङ्कणतामधुनापि परिसूचयितुमिव सज्जनानां किञ्चिदुत्तम्भित-कायं भगवन्तं भवानीवल्लभमभिवन्द्य सुरेशं तं पुटार्जुनेशमभिष्टूय चाभिष्टवैरिष्टैर्गजराजसंसेवितराजीवराजमानपादपङ्केरुहं हंसासनसमा-राधितनिजदेहं हंसवरशरणीकृतनिजचरणारुणाम्भोजं निजसौन्दर्यस-मानन्दितधराबृन्दारकबृन्दं दन्तविजितकुन्दकुड्मलान्तं तं भगवन्तं मत्तमातङ्गवरदमभिवन्द्य समस्तात्रीदेवं समोदमुदारगिरा ॥

अथ खल्वयमार्यवर्यो वर्यैः सह निजानुयायिभिः समागत्य सरसीरुहवासिनीवराहस्थलं निजामित्रद्विजराजविजिगीषयेव संरुद्ध-तदीयाध्वभिः, नक्षत्रैरिव सुधांशुकान्तैः, यात्रोद्यतमेदिनीनायकैस्त्वि सोद्यानैः, कल्पकवृक्षैरिव विविधाक्षयकोशभासितैः, विशालैरपि बहु-शालैः, विधिविधुशवैरिव विश्वकर्मकरैः, भामिनीजनैरिव सुरताभि-लाषिभिः, दोषज्ञैरपि गुणज्ञैः, शरणीकृतशर्वाणीपतिचरणैः, करुणा-र्णवार्णोजनिशरणारमणचरणारुणपुष्करषट्चरणान्तःकरणैः, धरणीगी-र्वाणगणै रमणीयैः शरणवरीणैरधिरोचमाने नगरवरे विराजमानं शाणकोणकषणविम-लमणिगणसमुल्लासमानमौलिं भगवन्तं तं कमलालीलालोलमनादि-कालं अभिवन्द्य सानन्दमभिष्टूयामन्दमिष्टजनतुष्टिप्रदमथ भारतसम-

राङ्गणमिव कुम्भसम्भवसमुद्भासितं, सज्जनसमाजमिव मुक्ताफला-शयोल्लासमानं, नन्दनवनमिव नन्दनीयदेवदारुवृन्दं, चन्दनमन्दार-कुन्दसहकाररसालसालतिलकताळतमालप्रमुखसालावलिसमुद्भासितम-धिगत्य तं मलयाचलकूटमवगाह्य तीर्थवरं बाणतीर्थे तीर्थपादपादा-म्भोरुहमध्यायमानगाथासुधाः समाश्रावयमाणः सानुयायिसज्जन-जातं जातामोदः समाजगाम तत्र व्यतीतरात्रित्रितयः त्रिकूटधरणी-धरेन्द्रं पापविनाशसरण्या ॥

तदनन्तरं पुनःपुनरवगाह्य चित्रानदीनिर्झरपूरं विरचितनैयमिकः अगाभरणमपि नागाभरणं, सद्दृष्टिमपि विषमदृष्टिं रक्तकण्ठमपि नीळ-कण्ठं गजाननराजीवमित्रमपि अगजाननराजीवमित्रं, निवारितकाममपि अनिवारितकामं भगवन्तं तमेनं पार्वतीरमणं सम्प्रणम्य प्रस्थाय ततः त्रिकूटशिखरिणः समाधिगत्य पुरवरमभिनवधन्वपुरं समासेव्य गोदा-मन्वर्थयन्तीमभिधां निजामध्युवास च दिवसत्रितयं तत्र ॥

तदा तु कदाचित् क्षणदायाम्—

स्वापे स च सह शिष्यैः
  कृतया तनुजापदे मुनिः सरिता ।
समगाद्देशिकनिकटं
  गुरुराडथ तं जगावेवम् ॥ ३२ ॥

कस्माद्भवानिहागात्
  सहानया भासमानया सरितेव ।
इति पृष्टो गुरुवर्यैः
  स मुनिः सा चैवमाचचक्षाते तम् ॥ ३३ ॥

न हि गम्यमितो भवता
  भवतापनिवारणाय सताम् ।
तत्रैव साधितं त-
  द्रसतां तु पुरैव यात्रया भवतः ॥ ३४ ॥

कलशीभूरहमार्या
ताम्रा सेयं सुपर्वसिन्धुवरा ।
तुष्ट्यैव स तु तटेऽस्याः
सङ्गमभागे पुरे रमामूर्तेः ॥ ३५ ॥

सीतारामगुरुर्मे
सादरगदितां तयोस्तदा वाचम् ।
शिरसा स तां गृहीत्वा
तथेति कुर्यां जगावेषः ॥ ३६ ॥

तदा त्रियामा शान्ताभू-
न्मित्रद्विडिति पश्यताम् ।
सूचयन्ती नष्टतारं
परिक्षीणासितांशुकम् ॥ ३७ ॥

तदनु देशिकोऽयं स्वप्नजातमर्थजातं सम्भावयमानः पुनःपुनः स्मारं स्मारमनुज्ञातस्ताम्रातटिनीकुम्भजातयोः अनिलोल्लसितत्रिदशालय-पद्मिनीपद्मायमानाभिः निखिलपुरवरविजयध्वजकाण्डायमानेषु केतु-दण्डेषु चकासन्तीभिरिव च कीर्त्यावलीभिर्दुकूलपताकाभिरुद्भासमानं झषभूषणसंसेवनसमागतवृन्दारकवृन्दायमानशातकुम्भसालभञ्जिकापरि-मण्डितचन्द्रशालामण्डलैः श्वेतद्वीपैरिव सुधाबिन्दुसन्दोहधवलैरब्धि-मेखलालेखाग्रेसरभवनवरैरभ्युल्लसन्तं कामिनीकुचकुम्भविजिगीषयेव प्राकारमधिरुह्य भासमानैश्चामीकरकुम्भैः समुल्लास्यमानमनवरतदह्यमान कालागरुधूमपटलधाराधरमालावलोकनादिव सदा नृत्यन्नीलकण्ठं निज-भवनमिवादभ्रविभ्रमाणां, सङ्केतनिकेतनामिव सौन्दर्यसुन्दर्याः, तदिन्दि-रावेरानगरं समासाद्य सह दासवर्गैः सुरनगरीमिव सश्यामां विचित्रा-मपि सचित्रां सज्जनावलिमिव बहुधान्यकार्यसम्पादिकां, दुर्जनतति-मिव सतामरसां, क्षितिपतितनयामिव नन्दिताळिगणां, सुयोधनायो-धनधरामिव कमलव्यूहप्रोल्लसन्तीं, मेरुगिरिमेखलामिव सुजातरूपां, अप्सरःसंहतिमिव समञ्जुघोषां, झषकुण्डलमण्डनस्याखण्डलनीलोपल-

मणिमालायमानां निखिलतटिनीविरचितमानामपहसन्तीमिव पङ्केरुह-वासिनीसहचरचरणारविन्दगलितां जह्नुमुनिबालिकां फेनजालव्याजा-दलसामिव दुर्जनसङ्गभिया अस्मदार्यनिवासपदार्थीकृतऋषिकुल्याभि-धानां निदानं निखिलभुवनसम्पदां ताम्रपर्णीं तामवगाह्य मुहुर्मुहुः सहोत्साहमनुष्ठितनिजनैष्ठिकः अभ्रङ्कषसालावलिसमुल्लासमानं, पाञ्चाल-देशमिव पार्षदप्रवरराजमानं, केळिकाननमिव नाळिकेरबकुलकुरवककपित्थचम्पकसहकारबदरपारिजातपाटलतालतमालप्रमुखसालजालसमुल्ल-सितमिन्दिरारमणस्य मन्दिरं तदधिगत्य सानन्दमानन्दारविन्दानिरा-कृततारकान्तं कान्तं कमलावेरायाः, रायमाश्रितजनसन्दोहानां, दोहन-मानन्दसम्पदां, पदपल्लवविजितारविन्दमरविन्दबन्धुनयनं नयनं सज्ज-नावलीनामवलोकनानन्दितनिजलोकं, सुरनायकसङ्गीतमण्डपमिव रम्भापरिभासमानोरुप्रदेशं, कनकाचलमिव चामीकरमेखलं, सन्ध्या-समयमिव पीताम्बरं, सरस्तल्लजमिव पद्मोद्भासितं, कामधेनुव्रातमिव श्रीवत्सराजितं, किरीटमालिनमिव निजगुरुजातविचित्रमणिहारिणं, नभःकालिकनभस्तलमिव सदा हिमकरकुण्डलमण्डितं, पयसां निधि-मिव प्रवाळप्रोल्लसितकमलं श्रीबेरारमणमाश्रितजनशरणं करुणातर-ङ्गिणीरमणं सम्प्रणम्य पुनः पुनः झषभूषणं भगवन्तं समाराध्य तुलसी-कुसुमादिभिरुपहारैः, विलोक्य चातकव्रातो जलधरव्रातमिव समानन्दि-तविमलस्वान्तः समस्तावीत् ॥

तदानीं खलु शरणीकृततरङ्गिणीपतितनयारमणारुणार्णोजानिच-रणैः सज्जनवरणीयगुणैररणीजनितकृशानुत्रितयतर्पणप्रवीणैः जानकी-रमणादिभिरिव दशरथसमाराधनधुरन्धरैः, सुरवैणिकवन्नारायणचरणा-रविन्दमकरन्दायमानगाथासमास्वादननिपुणैः, वैवस्वतमनुवत् श्रद्धो-पेतैः, विप्रवरैरपि सप्रवरैः वैष्णवाग्रेसरैः सम्प्रार्थितः सुतरां वस्त्वा चिरमत्रास्माननुग्रहीता भवतात् भवतापतप्तानिति देशिकोऽस्माकं तपोधनानामिव तुलसीकुसुमसंराजमानं धनाधिपधामेव मकरकुण्डल-सन्निधिभासमानं; नळकूबरचित्तमिव रम्भाविलाससमुल्लसितं कश्चन निलयं समासाद्य सादरमाराधितः सज्जनैः समाश्रावयमाणो नारायण-

चरणारविन्दमकरन्दायमानगाथाः सुधावधीरिणीरनुदिनमाराधयंश्च निजान्वयनाथं रघुनाथं निवसति सुखमद्यापि ॥

अवेत्य मित्रागमनं द्विजेरितात्
तदागमज्जागरणं द्विजेश्वरः ।
गुरुर्ममायं करुणातरङ्गिणी-
तरङ्गसङ्घर्षितमानसो महान् ॥ ३८ ॥

प्रक्षाळ्य पादावथ देशिकः कुशं
आचम्य चैकं परमास्तरं शुचि ।
कृत्वा तुलस्यम्बुरुहाक्षमालको
ध्यानस्य रामं विषयं व्यचीकरत् ॥ ३९ ॥

आध्याननिर्धूनमलोऽमलो जपन्
लक्ष्मीपतेरेष ऋचोऽघमर्षणीः ।
सस्नौ स कल्याणगुणार्णसां निधि-
स्ताम्रानदीवारिणि पापहारिणि ॥ ४० ॥

धृत्वाऽजिनं हारिणमेष देशिकः
पुण्ड्राणि स श्वेतमृदा तदाकरोत् ।
तानि प्रवृद्धप्रतिभाप्रवल्लरी-
प्रफुल्लमानप्रसवा विरेजिरे ॥ ४१ ॥

ततः समाधाय मनः स सन्ध्या-
मुपास्य सम्यक् त्रिपदीं जजाप ।
सहस्रसङ्ख्यं च षडक्षरीं तां
निधाय रामं हृदि सद्गुणेन्दुम् ॥ ४२ ॥

सम्पादयामास चिरान्ममार्यो
राजीवजाजीतुलसीः सजातीः ।
समालती चम्पकपारिजात-
मन्दारकुन्दोत्पलपुष्पपूगाः ॥ ४३ ॥

अथागमन्मद्गुरुरेष सद्गुणो
निजोटजं शिष्यगणैः समन्वितः ।
यथात्रिजाबालिवसिष्ठकाश्यपाः
पुरातनास्तापससूरिसेविताः ॥ ४४ ॥

संविष्टरीकृत्य कुशं स देशिकः
कर्माचकार प्रणतौ रघूद्वहम् ।
रामं सरामं समियाज जातमु-
द्राजोपचारैरुचितैरनन्तरम् ॥ ४५ ॥

गुरुरागरवैः पवित्रपात्रैः
रघुवल्लभमारराध रामम् ।
सहराममतीन्द्रियं मुनीना-
मपि तन्निजनेत्रमार्गपात्रम् ॥ ४६ ॥

दिननायककान्तिकाण्डपाता-
त्तदशर्म निशावशा कृशाङ्गी ।
शुशुभे लपनाम्बुजेऽस्य वक्तुं
तिलकं कमनीयमागतेव ॥ ४७ ॥

अधिशिरस्तटमार्यसमर्पितं
मकुटमद्भुतरत्नपरिष्कृतम् ।
सुरवरेशशिलामयभूभृतः
कनककूटमिवास्य विराजते ॥ ४८ ॥

स दाशरथये तस्मै खर्जूरबदरीफलम् ।
सादरं देशिकोऽस्माकं सदाराय न्यवेदयत् ॥ ४९ ॥

अथ खलु सोऽयमार्यवर्यः समाराध्य चामराराध्यं भगवन्तं रामभद्रमध्यासीनो हरिणाजिनमास्तरणं समगायत निगमान्तसारं [illegible] ॥

रुचिरं चिरं लपनं न विलोकितमपि वास्या मया मनसाद्य ॥

चपलाभाचपलाभासुरासुराऽयद्य भाति मे मत्तेवेयम् ॥

मत्ते मत्ते विरोधः को मयि यासि ॥

किमियं सुमनाः सुमना विभाति मीनकेतनलक्ष्यतामधिगतेव चिरम् ॥

सुरतया सुरतया सनययानया क्रीडयामो यामो वयमेवमस्या वसतिम् ॥

सुतनु सुतनुराज्ञावशगोऽनङ्गोऽस्या यस्या यदीयोऽयं सदये दयां भवभूतिमती सुमतिर्मयि सततम् ॥

नाळीकेळिधरे नाळीकेळिधरेऽधरे समास्वादाय विलसन्मकरन्दैरेनं माम् ॥

सरया सरया याता वनिता कमलयामलया सहैषा सहेर्ष्येवास्मासु ॥

चामीकरकलशां चामीकरकलशां त्रिलोकयथ साकूतमेतां पल्लविकाः ॥

मेखलायुतया मेखलायुतया बलयाबलया वसाम सहसामलहारया ॥

ललनालति लतिकाकाया यामिनीशं लपनप्रभयेयम् ॥

सा रमणी सारमणीयः संविमथ्नाति याति या मानसमपीयम् ॥

स्मरामि स्मरामितौजसः पादाम्बुजं तेऽतोऽरेः प्रहारं प्रहारं नयन् न यासि स्वं शरीरेनं माम् ॥

कलवल्लकी कलवल्लकीमियं रटयन्ती यन्तीव चित्रमहो समाह्वयति ये पुरतः पुरतः ॥

पलायते पलायते मकरकेतनस्य कामिमीनाकर्षणे सैषा सेर्ष्या वनिता या ॥

सुरासुरते सुरीसुरते सततं सततं सुरतं सुरते कृपयैतं पतितं पदारविन्दे भवती कुरुतात्त इति ॥

तदा खलु कदाचित् कुसुमसायकसायकशिलासारसारसाक्षपद-सारससारसायमानमानसेषु विरचितचोळपाण्ड्यरसानिवासेषु सतामग्रेसरेषु प्रसरत्कलिवैभवं न प्रभवेदत्रापि तत्र तत्रैव सर्वत इति तरसा तरसाशनप्रणीततापं देवदेवे वासुदेवे निर्जरकुलाध्यक्ष इव सहस्राक्षे सविनयमावेदयत्सु सुतरां कलिसङ्कुलतामपि सज्जनानां निखिलजनानुग्रहबद्धदीक्षो रक्षितनिखिलागमोदितकल्याणगुणः शिक्षितकलिकामादिगणः लक्षितसकलकलापारावारपारः कृपापाररत्नाकरः अस्मद्देशिकः शमदमादिधाम समाधाय तानेवमाचचक्षे —

स्मरतातं स्मरता तमुत्तीर्यते भवाम्भोधिः ॥

भव भीतो भवभीतोपास्यं रसजास्यं भर्तारं भक्तारं मायाः ॥

कीर्तयतालं कीर्तयता लंकेशानुजेन जितमजितपदं तमतो जगदीशमपि ॥

अर्चयतैतमर्चयतैतं येन मेतं भूयते भवति प्रातिहारिकोऽयं यतस्त मतः सततम् ॥

प्रह्लादं प्रह्लादं दितिनन्दननन्दनमिन्दिरानन्दनो वन्दनेन कृतवान् सदयालुः ॥

बृन्दारकबृन्दवन्दितं बृन्दावनमन्दिरानन्दिनं नन्दनन्दनं वन्दत भवन्तः ॥

भक्तारं भक्तारं भजतारं कमितारं जगतामजातकम्पाः सुजनाः ॥

राधया महितं गोपालमाराधयाम हितं गोपा लभ्येहा महामराः ! महतेह हवेन भविताऽतो जगतां सुतरां सुमतिः ॥

इत्थमभिहितवति महितं हितं परमहंससा,समिहिरे गुरुवर्ये समभिनन्द्य तमनुष्ठेयः सप्तदिनसप्ततन्तुर्जगतां भवता भवतापनिवारणायं करुणात इत्यत्यर्थमर्थयत्सु तेषु धरणीसुरसार्थेषु तरसा सरसार्थं निगमसार्थशिरोरसं संविवक्षुः सप्तादिनैरदीनमानसः समारभतैवं यथाविधि यथा विधिनन्दनो नारदः ॥

देशिकः कारयामास सप्ताहाध्वरमण्डपम् ।
श्रीबेरानगरे रम्ये श्रीबेरापुरतस्ततः ॥ ६१ ॥

तत्र हि—

सुरत्नमणिकुट्टिमे मणिगणैस्तदा मण्डिते
लसद्ध्वजपताकिका अनिलचालिता रेजिरे ।
सुदूरनिवसद्द्विजानिह महानगाहाध्वरो
भविष्यति समाह्वयन्त्य इव शङ्खचक्राङ्किताः ॥ ६२ ॥

घटितमाणिकवाटो यज्ञवाटस्तदानीं
चतसृषु हरितासु प्राप्तपक्षीशकेतुः ।
इम इति सुजनानां सूचयद्द्वारवर्यै-
र्विलसति पुरुषार्थानां चतुर्णां हि मार्गाः ॥ ६३ ॥

विशङ्कटपताकिकामकरमण्डितं मण्डपं
विवेश स गुरू रमापतिनिकेतचेता मुदा ।
पयोधितनयातनोर्नगरवासिभिर्भासुरै-
र्धराविबुधशेखरैराखिलसत्तमैः संयुतः ॥ ६४ ॥

अथ खलु गगनमिव सद्गुणं, तपोधनसदनमिव वितानसमुद्-भासितं, वैरोचनिवाजिमेधशालाभ्यन्तरमिव सप्तवेदिकं, सप्तादिननिर्वर्तनीयसप्ततन्तुमण्डपमध्यमध्यासीने नारायण इव करुणार्णवे कलानिधाविव कुवलयानन्दसम्पादके, गौतम इव न्यायशास्त्रप्रवर्तके, पाणिनाविव प्रकृतिपुरुषप्रत्ययप्रकाशके, वार्तिककर्तरीव वररुचौ, जैमिनाविव विबुधविग्रहनिवारके, पर्जन्य इव साधुजनतापानिवर्तके, सुरतोत्सुककार्तवीर्य इव संभितनर्मदे, अत्राविवानसूयाश्रये, समीरण इव सदागतौ, काव्य इव कवौ, गीष्पताविव विबुधगुरौ, वरुण इव प्रचेतसि, धनाधिप इव विविधार्थसङ्ग्रहीतरि, भवानीवल्लभ इव कलानिधिशेखरे, धर्मात्मज इव सदा सविजये, विजय इव सुभद्रान्विते, स्वायम्भुवमनाविव सत्प्रियव्रते, महाराज इव सदाचारसम्पन्ने अस्मद्गुरुवर्ये समाक्रमत्वमल्पीयः सुकृतं दीनलोकोऽयमिति समुपक्रान्तवति क्रतुं सप्तदिननिर्वर्त्यमानं अतितरां निर्वृतचेतसः सरसीरुहमिव हंसाः, पारावारमिव सरि-

त्पूराः, दातारमिव याचितारः, भागीरथीमिव यात्राभिलाषिणः, प्रपामिव तृषिताः, दिनकरमिव कोकाः, चन्द्रमसमिव चकोराः, दाशरथिमिव कलशीभवादयः समाययू रमारमणचरणारुणाम्भोजनिशरणाः धरणीगीर्वाणगणाः संवदन्तः परस्परमेवम् —

नरवरा वरवराहचरितं ललितं भवितात्र श्रुतिसरणीशरणम् ॥

नरके नरकेसरीन्द्रचरणारविन्दमकरन्दं पिबामो न सरामो वराः ॥

विहरामारामा रामारामे सहरामे सततं रसिकाः ॥

धीवरा धीवरानवलोकयत जानकीशरक्षितान् भक्तैः ॥

सुगतेऽसौ सुगतेऽसौ न रमारमणपदं सम्पादयेत् ॥

कलिले कलिलेलिहानगरैर्मनःकमले विनतासुतेशं भजामो रमेशम् ॥

यामो या मोहपटलतूलवात्याश्रोतुं तां हरिगाथां नगाहशालाम् ॥

तदनन्तरं सुरवरेष्विव सुधर्माश्रयेषु, प्रहर्तुमुद्यतेष्विव प्रवृद्धसत्त्वेषु, कामिजनेष्विव रामानुरक्तहृदयेषु, धराधरवरेष्विव प्रवृद्धवंशेषु, हेमन्ताहर्गणेष्विव हिमशीतलमानसेषु, द्वन्द्वायोधनधुरन्धरचाणूरप्रमुखयोधेष्विव श्रीपतेश्चरणानुबद्धरागेषु, सरोरुहेष्विव हंसपादसङ्गमरुचिरेषु, धनदात्मजेष्विव स्वतःसिद्धसर्वार्थेषु, धरकन्यावल्लभवत् सभापतिषु जितकामेषु च, सप्तद्वीपेष्विव सकुशेषु केषुचित् , सुरवैणिकेष्विव विरचितमहेन्द्रोपान्तवासेषु केषुचित् , द्वारकानगरवद्यादवक्षितिभृन्निवासेषु केषुचित् , कावेरीकनकापूरेष्विव कुटकाचलसंश्रयेषु केषुचित्, नक्षत्रगणेष्विव पुष्करालयेषु, गोवृन्देष्विव वृषप्रवृद्धरुचिषु समुपविष्टेषु तेषु परमहंसेषु शृण्वत्सु सहर्षं सहर्त्विग्गणं समारभत यथाविधि निगमान्तसारम् ॥

तदनन्तरं यथाविधि निर्वर्तिते च सप्तदिनानिर्वर्त्यमानसप्ततन्तुमहोत्सवे अमित्रता त्रियामासु, सतामरसता कमलिनीषु, कलाहीनत अमायां यामिनीशस्य, शृङ्खलाबन्धः प्रबन्धेषु, संसारः शिलाविशेषेषु, मित्रच्छादनं दुर्दिनेषु, अपारिजातता जनेषु न मालासु, क्षमात्यागो हर्यक्षकेतौ, मित्रहानिर्निशासु, सदप्रकाशो दिवसेषु, पलाशसङ्गृहीतिरुपनीतिकर्मणि, कलानिधिविद्वेषः सैंहिकेये, दुर्वर्णयोगश्चरणाभरणे, हिरण्य-

हारिता वराहतनोः, अनम्रता तृणराजेषु, यमोल्लासो निगमेषु, मन्दता शनैश्चरस्य सत्सु रागाभावो रसातललोके, वंशविच्छेदो वेणुवनेषु, स्नेहहानिः प्रवृद्धदीपेषु, अपवादः शास्त्रेषु, सुकृतनाशस्त्रेताप्रारम्भे न जनेष्विति परमेवं व्यवस्थितम् ॥

तदा खलु कदाचिद्विदां वरेभ्यः समुपदिशन्तं वेदान्तसारमधिरोहणभूमिमिव विद्यालतायाः, सङ्केतनिकेतनमिव श्रीनिकेतनपादकमलभक्तिमत्तकाशिन्याः, कन्दमिव परमानन्दमन्दारपादपस्य कोशगृहमिव सदाचारसम्पदां, निजसदनमिव शमदमौदार्यसौन्दर्यादिगुणानां, अश्मसारमिव कुसुमेषुपृषत्कानां, गरुत्मन्तमिवामर्षकुम्भीनसस्य, द्वादशात्मानमिवान्तरतमसो निवर्तनाय समाविर्भूतं वसुधातले, डिण्डीरखण्डैरिव निखिलकलानिर्जराणां जिह्वाग्रसिंहासनहंसवाहनमहिळाकेळिकुन्दकुड्मलैरिव च संराजमानैः अपारविद्यापयःपारावारान्तरसञ्चरत्तरङ्गवर्गपारम्परीरीतिमनुसन्दधानैर्दशनैः परिशोभमानं, लावण्योदधिविद्रुमायमानाधररागकमनीयमुखं, ज्ञानवैराग्ययोः हृदयविहारमण्डपारोहणायमाननळिनाक्षतुलसीमणिमालासमुल्लसिततनुं, ब्रह्मवर्चोलहरीमिव यज्ञसूत्रिकां दधानं, महावराहमिव श्रीवत्सगोत्राभिरामं, धनाधिपमिव पुण्यजनाग्रगण्यं, त्रिदशेश्वरमिव वृद्धश्रवसं, धूर्जटिमिव शुचिजानितनयं, सुग्रीवमिव हरिजनाध्यक्षं, वृत्तलक्षणमिव शार्दूलविक्रीडितोल्लासितं, दशरथमिव सुमन्त्रसाधितसर्वार्थं तं निगमान्तसारविहृतिकान्तारानवरतकलितलीलं, कमलाललनचरणकमललीलाविमलपीयूषसमास्वादनलोलं, विमतमतमतङ्गजविजयसन्धृतमृगराजलीलं सीतारामाभिधानमेनं निगमान्तसारगुरुं, कल्पानोकहमिव याचकाः, धेनुमिव वत्साः, पुरन्दरमिव बृन्दारकाः, त्रिपदीमिव मन्त्रार्थाः, राजानमिवोपजीविनः, महापुरुषमिव महालक्ष्म्यः, नळिनीमिव मराळाः, कमलाकान्तमिव चिरन्तनोक्त्यन्ताः, प्रजेश्वरमिव प्रजाः, सङ्घशः समाययुः सज्जनाः ॥

तदानीं खलु हंसा इव सारासारविवेचनचतुराः, गीर्वाणा इव धिषणोत्कृष्टाः विपश्चितोऽपश्चिममनीषाः, मित्रोदय इव सारस-

ब्राताः, प्रोषितपतिदर्शन इव पतिव्रताः, शरदागम इवाकाशाः, हिमांशुदर्शनादिव कुमुदाकराः, वर्षासमय इव मयूराः, निधिसमधिगम इव निर्धनाः, सासारवारिदसन्दर्शनं इव चिरोपोषितचातकाः, वृत्रवध इव विबुधाः, चिन्तामणिप्राप्ताविव चिन्तितसिषाधयिषवः अस्मदाचार्यसन्दर्शनतः सुतरां सम्प्रवृद्धविस्मयातिरेककोरकास्तमभिवन्द्य पुनः पुनः सञ्जगदुरेवं सज्जनाः —

श्रीमच्छुकाभिधानै-
 रार्यैर्यद्भाष्यरत्नमाभाषि ।
उपदेष्टव्यं भवता
 तद्भवतापापनोदनं कृपया ॥ ६५ ॥

अस्मद्गुरुवर एष स
 उपादिशत्करुणयाथ तद्भाष्यार्थम् ।
अवहितमनसस्तं ते
 सञ्जगृहुः सादरं सहोत्साहम् ॥ ६६ ॥

तदानीं खलु मिहिरकरविहार इव हिमसङ्घाः, भार्गरिमणसमाविर्भाव इव महामायाः, ग्रीष्म इव क्षुद्रापगाः, प्रत्यूषारम्भ इव क्षणदाः, जाज्वल्यमानज्वलनालिङ्गन इव पतङ्गाः, चक्रवातान्तर्गता इव तूललवाः,- केसरिगणविलोकन इव करिणीशावगणाः, कर्णशष्कुलीसम्प्ररोहन्महारुजां जनानां भेरीध्वनय इव श्रुतितापकारिणः, अहर्गणा इव सत्पदार्थहीनाः, योधाग्रेसरा इव परलोकनिरोधकाः, गाढान्धकार इव प्रत्यक्षदृश्यमानद्रव्यापोहकाः, शिशुपालपौण्ड्रकसाल्वादय इव परब्रह्मावाच्यवाचकाः, वेनादय इव पुरातनगिरामानर्थक्यनिर्धारकाः, वेदविरुद्धराद्धान्ताः वैनतेयविद्रावितवाताशना इव शकलीबभूवुर्नितराम् ॥

तदानीं खलु सज्जनास्ते परमहंसपरमगुरुसमुपदिष्टं तदनिशमिष्टार्थपूर्त्यै परिपठन्तस्तमस आन्तरस्य निवर्तनतः परिमितेतरपारितोषमवापन्नवः ॥

एवं दिशन्नतितरां गुरुसार्वभौमः
सर्वाः कलाः सकलसूरिजनेभ्य एषः ।
संराजतेऽप्रतिसमं स यजन् रमेशं
सप्ताहयज्ञनिजदेशिकपूजनाद्यैः ॥ ६७ ॥

श्रीबेरापुरवरवाससाभिलाषो
भक्त्यास्मद्गुरुवर एष वैष्णवाग्र्यैः ।
तत्रत्यैरनुसवनं सुपूज्यमानो
विप्रैस्तत्पुरवर एव सम्प्रकास्ति ॥ ६८ ॥

श्रीसीतारामपादात्समजनि विबुधावासवासं च लेभे
व्याप्ताकूपारपारं बहुतरवरगाङ्गेयभूरण्यवाप्ता ।
शुद्धा सिद्धान्तरङ्गोल्लसदमलगुणा कीर्तिमय्यापगाग्र्या
विध्वस्ताघौघसङ्घा त्रिभुवनशुभदा नित्यदा सम्प्रकास्ति ॥

सीतारामगुरोः पदाब्जयुगळं कारुण्यवारांनिधे-
रस्मन्मानसषट्पदस्य सदनं सन्तः समाचक्षते ।
आस्तामेतदियं तदीयकृपया निर्वर्तिता मत्कृतिः
नूनं तस्य वदेदिह श्रवणयोरेकान्तभक्तं च माम् ॥ ७० ॥

मम तु भवविषाब्धौ जन्म भूयो न भूया-
द्यदि भवतु तदानीं रामपादाब्जभक्तिः ।
इति मम हृदयस्थं भावमन्वीक्ष्य सम्यक्
स हि खलु करुणाब्धी रामभद्रो विधत्ताम् ॥ ७१ ॥

नवपदमणिव्रातं हारं सुवर्णगुणोज्ज्वलं
इति जलजनिं वह्न्यर्थं तं त्रिवारविशोधितम् ।
वरतररसं युक्तं भावैः शुभध्वनिभासुरं
कुरुत सुधियः प्रीत्या कण्ठे सदा नतिरस्तु वः ॥ ७२ ॥

सीतारामोद्भूतां सुकविमनोरञ्जकाभिधां मालाम् ।
नवरससमुल्लसन्तीं धिषणारामाः कुरुध्वमवतंसम् ॥ ७३ ॥

श्रीमत्कुरुङ्गनगरे निवसन् लक्ष्मीसतीमणेः सूनुः ।
सीतारामाख्यसुधीर्व्यतनोन्निजदेशिकस्य चारित्रम् ॥ ७४ ॥

सीतारामगुरूणां चित्रचरित्रप्रकाशकः सोऽयम् ।
कल्पद्रुस्तत्करुणापयसा संवर्धितश्चिरं जीयात् ॥ ७५ ॥

गोलीलोपेतैस्सत्पद्यैर्गद्यैः सचिन्तकार्थैश्च ।
कविचित्तरञ्जकोऽयं राजत्वासोमभास्करं राजन् ॥ ७६ ॥

इति गर्गकुलशेखररामकृष्णाचार्यसुत-
सीतारामसूरिविरचिते कवि-
मनोरञ्जके चतुर्थोल्लासः ।

---

पञ्चचत्वारिंशदधिकसहस्राब्दे वैशाखमासि एकोनविंशद्दिवसे भूसुत-दिने शुक्लप्रथमायां सायाह्नसमये एष कविमनोरञ्जकाख्यकाव्यग्रन्थः लिखित्वा समाप्तिमगात् ॥

---

# श्लोकानुक्रमणी ।